बृहदारण्यकोपनिषद् के—"विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात् सम्बाहुभ्यां धमति०" इत्यादि एवं गीता के "सर्वतः पाणिपादान्तं सर्वतोऽक्षिशिरो मुखम्" इत्यादि वाक्यों से पूर्णब्रह्म की साकारता स्पष्टरीत्या निर्धारित होती है।

अचिन्त्यानन्त-शक्तिमान् ब्रह्म के स्वरूप का निर्णय लौकिक युक्ति से नहीं, प्रत्युत वेद-वाक्यों के अर्थावबोध से ही किया जा सकता है, इसीलिये सर्व-वेदार्थदर्शी भगवान् बादरायण ने 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' तथा 'द्रष्टव्यः' के प्रत्यक्षरूप में गीतावक्ता, सच्चिदानन्दकन्द, पूर्णब्रह्म भगवान् श्रीकृष्ण को ही उपस्थापित किया है। महायोगीश्वर, सर्वतत्त्वज्ञ श्रीशुकाचार्य ने भी सर्व-प्राकृतधर्मों से विलक्षण, आनन्द-मात्र करपादमुखोदरादि, विविध-नाम-गुण-कर्म-लीला-युक्त शुद्ध-स्वरूप परब्रह्म श्रीकृष्ण के चरित-गान द्वारा इसी परतत्त्व का प्रतिष्ठापन किया है।

महर्षिपराशर-प्रोक्त विष्णु, ब्रह्म, पद्म आदि पुराणों में भी नराकृतिधारी परब्रह्म का ही वर्णन उपलब्ध होने से भगवान् कृष्ण ही पूर्णावतारी, और अन्य अवतार उनके अंशरूप सिद्ध होते हैं।

वैष्णव-सिद्धान्त के प्रवर्तक अन्य आचार्य भी समस्त अवतारों को समकक्ष मानते हुए भी आदर्श-स्वरूप किसी एक विशेष अवतार में सर्वात्मभाव से सेव्यत्व बुद्धि रखते चले आये हैं, क्योंकि "यो यदंशः स तं भजेत्" इस भक्ति-मार्ग की सम्मत-प्रणाली के अनुकूल अपने मूल-रूप उपास्य अवतारों

की पूर्णत्व बुद्धि से उपासना करना युक्ति-शास्त्र दोनों से सिद्ध है। "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इस गीता-वाक्य के अनुसार पूर्णपुरुषोत्तम भगवान् श्रीकृष्ण भी तो अपने भक्त के लिये उसी सेव्यरूप में उपस्थित होने की प्रतिज्ञा से बद्ध हैं, जिसमें भक्त की दृढ़निष्ठा होती है। अतः उक्त शास्त्र-वचनों से कर्म-ज्ञान-उपासनाकाण्डात्मक समस्त वेद-राशि का यही एकमात्र सार निकलता है कि शुद्ध, साकार ब्रह्म अनन्त-रूप होने पर भी मूल-रूपेण भगवान् श्रीकृष्ण-स्वरूप ही है।

गीता (१५ अध्याय) में "सर्वस्य चाहं हृदि सन्निविष्टः" से लेकर "यो मामेवमसंमूढो जानाति पुरुषोत्तमम्" इस श्लोक तक भगवान् श्रीकृष्ण ने अपनी सर्वत्रव्यापकता परिदर्शित कर स्वयं को ही वेद-वेदान्त-वेद्य कहा है। इसी प्रकार क्षर-अक्षर का विवेचन कर क्षर से अक्षर को और अक्षर से लोक-वेद-प्रसिद्ध पूर्ण-पुरुषोत्तम (स्वयं) को श्रेष्ठ अभिव्यक्त किया है। अन्त में "यो मामेवमसंमूढो जानाति०" इस श्लोक के 'एव'कार द्वारा अपने स्वरूप को ही परम उपास्य सिद्ध किया है।

गीता के 'पुरुषोत्तम-योग' नामक अध्याय का सारांश यह है कि—"अधिभूतं क्षरो भावः" इस प्रमाण के अनुसार क्षर परमात्मा का आधिभौतिक स्वरूप है, और "प्रकृतिः पुरुषश्चोभौ परमात्मा भवत्पुरा ; यद्रूपं समधिष्ठाय तदक्षरमुदीर्यते।" इस प्रमाण के अनुसार जिस रूप का अधिष्ठान लेकर परमात्मा ने प्रकृति और पुरुष का रूप धारण किया है, वह अक्षर

उनका आध्यात्मिक स्वरूप है। इन दोनों से श्रेष्ठतम नित्य-शुद्ध-बुद्ध-मुक्तस्वभाव, कलावतार, पूर्णपुरुषोत्तम, भगवान् श्रीकृष्ण हैं। उक्तरूप से भजन करनेवाला ही 'असंमूढ' एवं 'सर्वविद्' कहलाता है, और अन्तकाल में इसी स्वरूप का स्मरण करनेवाला अपुनरावृत्ति को प्राप्त करता है। अतः यही सिद्धान्त परम रहस्य है।

भागवत-तृतीयस्कन्ध में विदुर के प्रश्न करने पर मैत्रेय ने प्रत्येक कल्प और उनके अवतारों का निरूपण करते हुए सारस्वत-कल्पीय श्रीकृष्णावतार को ही पूर्णावतार सिद्ध किया है।

तद्विषयक श्लोकों का तात्पर्य इस प्रकार है—

"ब्रह्मा की आयु के अर्धभाग की 'परार्द्ध' संज्ञा है, अतः उनकी शतवर्षात्मक पूर्णआयुष्य में 'पूर्वपरार्ध' एवं 'द्वितीय परार्ध' इस प्रकार की व्यवस्था मानी गई है। ब्रह्मा के पूर्वपरार्ध-काल के आदिभाग में उनके वर्षमान के अनुसार सौ वर्ष का 'ब्राह्म'-नामक एक महाकल्प हुआ, जिसमें स्वयं भगवान् ने ब्रह्मारूप से प्रकट होकर सृष्टि-रचना की थी। भगवान् के उस रूप को 'शब्दब्रह्म' इस नाम से पुराणों में सम्बोधित किया गया है। उक्त ब्राह्म-कल्प के अन्त में ( पूर्व-परार्धान्त में ) पाद्मकल्प-नामक महाकल्प हुआ, जिसमें भगवान् श्रीहरि के नाभि-सरोरुह से लोक-पितामह ब्रह्मा का अधिष्ठान-स्वरूप कमल प्रकट हुआ, और इसी से उस कल्प का नाम 'पाद्म' हुआ। उक्त पाद्मकल्प के अन्त ( द्वितीय परार्ध के

आदि ) में वर्तमान 'वाराहकल्प' का समय आया, जिसका नामकरण श्रीहरि के वाराह-रूप धारण कर पृथ्वी के उद्धार करने से हुआ। (भाग० ३ स्कं० ११ अ० ३३ श्लोक)

"तत्तत्कल्प में अवतरित व्यास के द्वारा तत्तत्कल्प का वृत्तान्त तत्तत्पुराणों में ग्रथित किया जाता है, इस कारण कल्प-भेद की सृष्टि के अनुसार पुराणों में परस्पर मतभेद प्रकट होता है।" इत्यादि मत्स्यपुराण के कल्पभेदाध्याय के वचनों से यह निश्चित किया गया है कि—कृष्णद्वैपायन—वेदव्यास-रचित श्रीभागवत महापुराण ही सारस्वतकल्पीय वृत्तान्त का प्रतिपादक है, और इसी में सारस्वतकल्पीय पूर्णावतार भगवान् श्रीकृष्ण की लीलाओं का गुम्फन किया गया है।

भागवत में सूतजी ने "एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्" इन वचनों से अन्य अवतारों की अंश-कलावतारता और श्रीकृष्ण की पूर्णावतारता का समर्थन किया है।

जिन सिद्धान्तवादियों के मत में "पुरुषो ह वै नारायणोऽकामयत" इत्यादि श्रुतियों के अनुसार 'नारायण' को ही सृष्टि का कर्ता, धर्ता, संहर्ता और परब्रह्म माना गया है, उनके मत में भी नारायण पुरुष-रूपधारी ही हैं। भागवत के "जगृहे पौरुषं रूपं भगवान्महदादिभिः०" इस श्लोक के अनुसार भगवान् श्रीकृष्ण परब्रह्म ने ही पौरुषरूप धारण किया है, यह सिद्ध होता है। अतः अन्य सिद्धान्तियों के मूलरूप नारायण भगवान् श्रीकृष्ण के अतिरिक्त अन्य नहीं हैं, यह निर्विवाद हो जाता है। पृथक्-पृथक् अवतारों

की यावन्मात्र क्रिया-ज्ञान-शक्तियाँ पूर्णरूप में एकमात्र भगवान् श्रीकृष्ण में ही दृष्टिगोचर होती हैं, अतः वही मूलरूप परब्रह्म माने गये हैं। वेदों की रहस्य-प्रकाशिक, पूर्णप्रमाणभूत गीता के द्वारा भी इसी अर्थ की पुष्टि होती है।

श्रीभागवत में "सूत ! जानासि भद्रं ते" इत्यादि श्लोकों में भगवदवतार के उद्देश्य का प्रश्न उठाकर उसके उत्तर में समस्त अवतारों का चरित-निरूपण संक्षेप में करते हुए, कृष्णावतार का प्रयोजन और लीलाओं का विवेचन विस्तृत रूप से किया गया है, जिससे वेदव्यास के हार्दिक अभिप्राय से अन्य अवतारों की समानकोटि और श्रीकृष्णावतार की उच्चकोटि सिद्ध होती है।

मत्स्यादि अन्य पुराणों में भी कर्म-ज्ञान-भक्ति का यथावसर विशद विवेचन करते हुए भगवान् श्रीकृष्ण की भक्ति का विशेष माहात्म्य प्रदर्शित किया है, जिससे श्रीकृष्ण की परात्परता में किसी प्रकार का सन्देह नहीं रह जाता।

वीतराग संन्यासियों को वेदार्थ-ज्ञान के लिये प्रतिदिन गीता-पाठ का उपदेश किया गया है, जिससे उसके प्रवर्तक को पूर्णआप्तता प्राप्त होती है, इस प्रकार की पूर्णआप्तता पूर्णब्रह्म के अतिरिक्त अन्य किसे प्राप्त हो सकती है ? फलतः श्रीकृष्ण की परमकाष्ठापन्नता निःसन्दिग्ध सिद्ध हो जाती है।

जिसप्रकार शास्त्र-पुराण-वचनों से यह ज्ञात होता है कि— सारस्वतकल्प में पूर्णावतार श्रीकृष्ण का प्राकट्य हुआ था, उसीप्रकार इस वाराहकल्प के वर्तमान मन्वन्तर के अट्ठाईसवें

द्वापर में भी उनकी पूर्णावतारता अवगत होती है। अतः सारस्वत कल्प के वृत्तान्त-बोधक श्रीभागवत की निर्दिष्ट-प्रणाली के अनुसार उनके भजन-सेवन में किसी प्रकार की अशास्त्रीयता नहीं आती।

प्रथम ही यह कहा गया है कि—ब्राह्म, पाद्म आदि कल्पों का समय ब्रह्मा के सौ वर्षों के समान था, पर कतिपय विद्वानों के मतानुसार वे ब्रह्मा के एक दिन के समान ही माने गये हैं। अर्थात् ब्रह्मा के एक दिन में एक कल्प व्यतीत हो जाता है। इस पक्ष के अनुसार ब्रह्मा के एक वर्ष (३६० दिन-स्वरूप कल्पों) में तीन सौ साठ श्रीकृष्णावतारों के होने पर भी सारस्वतकल्पीय कृष्णावतार की पूर्णता एवं अन्य अवतारों की अंशरूपता में किसी प्रकार का सन्देह नहीं रह जाता।

वैदिक-कर्मनिष्ठ पुरुष वेदतन्त्रोक्त-विधि से जिन-जिन देवताओं का आवाहन, पूजन आदि करता है, वे सब "मंत्राधीनाश्च देवताः" इस उक्ति से मंत्र-परतन्त्र माने गये हैं। परन्तु भगवान् कृष्ण का सर्वतन्त्रस्वतन्त्रता में किसी प्रकार की बाधा न होने से उनकी पूर्णेश्वरता निर्बाध सिद्ध हो जाती है। वेदोक्त उपासना-मार्ग—जो भुक्ति-मुक्ति दोनों का साधक माना गया है—और कुछ नहीं, केवल "भक्तियोगं स लभते एवं यः पूजयेत माम्" इत्यादि भागवत-वर्णित भगवान् कृष्ण का ही भक्ति-मार्ग है। इसी के द्वारा पूर्णब्रह्म का आराधन कर भक्ति-मुक्ति दोनों की प्राप्ति की जा सकती है।

उपर्युक्त विवेचन से वेद-उपनिषद्-गीता-ब्रह्म-सूत्र-भारत-पुराणादि सम्पूर्ण साहित्य का यही निष्कर्ष निकलता है कि—परमात्मा के प्रति सर्वतोधिक निरुपधिक प्रेम ही जीव के योग-क्षेम का साधक है। वेद और उपनिषदों के 'तत्त्वमसि', 'आत्मैवेदं सर्वं', 'सोऽहं', 'आत्मावारे दृष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यादि चतुर्विध महावाक्यों की तथा गीता-इतिहास-पुराणोक्त 'दासोऽहं कृष्ण तवास्मि' इत्यादि अर्थबोधक पञ्चम महावाक्य की अन्योन्य संगति लगाने से उपर्युक्त अर्थ की पुष्टि होती है।

आचार्यों ने उक्त महावाक्यों का अर्थ पृथक्-पृथक् लगाया है। किसी का कथन है—'तत्त्वमसि' के अर्थावबोध से यद्यपि जीव-ब्रह्म की भेद-प्रतीति होती है, तथापि उससे चरमावस्था में दोनों की अभिन्नता ही मानी गई है। किसी का मत है—'तत्त्वमसि' इस वाक्य के अर्थ से जीव की भगवदंशता प्रतिपादित होती है, इत्यादि। परन्तु उक्त समस्त अर्थों का सार यही निकलता है कि ब्रह्म को आत्मस्वरूप जानने से ही उसके प्रति सर्वतोधिक स्नेह हो सकता है। 'आत्मनस्तु कामाय सर्वं प्रियं भवति' इत्यादि उपनिषद्-वाक्यों में जिस आत्मा को प्रियतम कहा गया है, वह वास्तव में श्रीकृष्ण ही है। 'प्रेष्ठो भवांस्तनु भृतां किल बन्धुरात्मा०' इस भागवत-वचन से वही सर्वात्मा और प्रेष्ठ-स्वरूप माने जा सकते हैं, अतः उनकी श्रवण-मनन-निदिध्यासन-रूप भक्ति तथा तदीयता-बुद्धि से जीव को स्वरूप ( मुक्ति ) की प्राप्ति हो सकती है।

इसप्रकार शास्त्र के महावाक्यों का अर्थज्ञान—'शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्' ( गीता ) तथा 'श्यामसुन्दर ! ते दास्यं करवाम तवोदितम्' ( भाग० ) इत्यादि उक्तियों के अनुसार—शिष्यता और दास-वृत्ति के धारण करने पर ही सद्गुरु के उपदेश से हो सकता है। तदनन्तर गुरु के द्वारा भगवच्चरणों में आत्म-समर्पण तथा सेवा-कथा द्वारा भगवद्भजन करने से उपासक को स्वाभीष्ट की प्राप्ति हो सकती है। इस भक्ति को चिरस्थायी बनाने के लिये—'सकृदेव प्रपन्नाय तवास्मीत्यभियाचते ; अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम' इत्यादि शरणागत-रक्षणार्थ की गई भगवत्प्रतिज्ञाओं पर—दृढ विश्वास करना अनिवार्य है।

भक्ति के लक्षण-द्योतक मुख्यतया दो प्रमाण-श्लोक उपलब्ध होते हैं—

**अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।**
**इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ ( गीता )**
**माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः ।**
**स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथा ॥**

**( नारद-पंचरात्र )**

यद्यपि उक्त दोनों श्लोकों का साधारण अर्थ भिन्न-भिन्न प्रतीत होता है, तथापि दोनों का अन्तःस्वारस्य एक ही है।

द्वितीय श्लोक में—माहात्म्य-ज्ञान-पूर्वक जो सुदृढ ( चिर-स्थायी ) सर्वतोऽधिक ( अनुपम ) स्नेह होता है, वह मुक्ति-

प्रदायक भक्ति कहलाता है—यह प्रतिपादित है। यही भाव गीता के उपरितन श्लोक में भी विधि-पूर्वक प्रदर्शित किया है। भगवन्माहात्म्य का ज्ञान—'अहं सर्वस्य प्रभवो, मत्तः सर्वंप्रवर्तते' इस पूर्वार्ध के अनुसार—भगवान् को ही सर्वकारण-कारण एवं समस्त सृष्टि का प्रवर्तक—रचयिता—मानने से ही हो सकता है, क्योंकि भगवत्स्वरूप और भगवल्लीलाओं का ज्ञान ही माहात्म्य-ज्ञान कहा जाता है। तत्स्वरूप और तत्कर्तव्य से अनभिज्ञ पुरुष किसी व्यक्ति के प्रति प्रेम कैसे कर सकता है? 'स्नेहो भक्ति रिति प्रोक्तः' इस चरण के द्वारा वर्णित स्नेह गीता-श्लोक के 'भजन्ते' इस पद से बोधित होता है, क्योंकि स्नेह के बिना भजन असंभव है। इस स्नेह-भजन में बालक और माता के समान भक्त और भगवान् का सम्बन्ध स्थिर किया गया है। 'सुदृढ' और 'सर्वतोऽधिक', इन दो विशेषणों का विवरण गीता के 'भावसमन्विताः' इस पद से होता है। अर्थात् इदमित्थतया माहात्म्य के ज्ञाता विद्वान् ही भाव से समन्वित (सम्यक्प्रकार—सुदृढ़-अनुपम रीति से—अन्वित-युक्त) होकर ही भजन करते हैं।

गीता में भक्ति का प्रतिपादन करते हुए—

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम्;
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च।

इस श्लोक में उसके प्रकार और फल का विवेचन किया है। 'मच्चित्ताः' एवं 'मद्गतप्राणाः'—इन दो विशेषणों से भक्त के

चित्त और प्राणों की भगवल्लीनता का वर्णन किया है, जिसका आन्तरिक अभिप्राय यह होता है कि भक्तों का चित्त—कार्यरूप पञ्चज्ञानेन्द्रियों तथा प्राण—क्रिया-शक्ति-कार्यरूप पञ्चकर्मेन्द्रियों का व्यापार—भी भगवदर्थ ही होता है, अथवा होना चाहिये*। भक्तों के चित्त और प्राण भगवद्गत होने के पूर्व ही भगवत्कथा-श्रवण और नाम-संकीर्तन से स्वतः ऐसे विमल हो जाते हैं, जैसे शरद् के आगमन के पूर्व ही सलिल। क्योंकि श्रवण और कीर्तन का वस्तु-प्रभाव ही ऐसा है। गीता के 'बोधयन्तः परस्परं' इस पद से यह ज्ञात होता है कि भक्तगण समानशील-व्यसन व्यक्ति के साथ ही भगवच्चरित्र-संकीर्तनात्मक वार्तालाप करते हैं। 'कथयन्तश्च मां नित्यं' इस वाक्य से यह अर्थ प्रकट होता है कि सर्वदा भगवच्चरित्र-विषयक चर्चा करना ही भक्तों का एकमात्र कर्तव्य होता है।

सर्वदा इस प्रकार के आचरण से निरन्तरप्रचलित सेवा-कथा-स्वरूपात्मक साधन-भक्ति सिद्ध होकर स्वयं फलरूप में परिणत हो जाती है। यह बात 'तया मुक्तिः' और 'तुष्यन्ति च रमन्ति च' इन दो अन्तिम पदों से विदित होता है। अर्थात् साधन-भक्ति के सिद्ध हो जाने पर भक्तों को आत्मानंद एवं आत्मरमणरूप मुक्ति (अन्यथारूप को छोड़कर स्वरूप

---

* भगवत्सेवा में समस्त इन्द्रियों का कैसा उपयोग होता है, इसका ज्ञान वल्लभाचार्य-रचित 'निरोध-लक्षण'-ग्रन्थ से सुस्पष्ट होता है।

की प्राप्ति ) हो जाती है। इसी को 'फलात्मिका साध्यभक्ति' इस नाम से शास्त्रों में कहा गया है।

भक्ति के अतिरिक्त केवल ज्ञान से ब्रह्मभाव प्राप्त करनेवाले ज्ञानियों को कश्चित् ही भगवत्कृपा द्वारा उक्त भक्ति प्राप्त होती है। यह कथन निम्न-लिखित गीता के श्लोकों से परिपुष्ट होता है—

ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्॥
योगिनामपि सर्वेषां मद्गतेनान्तरात्मना।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः॥

शास्त्रों के पर्यालोचन से यह निर्विवाद है कि ब्रह्म-प्राप्ति के साधन रूप कर्म, ज्ञान तथा भक्तियोग में उत्तरोत्तर बलिष्ठता है। जिस प्रकार भगवन्निवेदनात्मक भक्ति के द्वारा कर्म फल-साधक होता है, उसी प्रकार भक्ति-सम्वलित होने पर ज्ञान भी। भक्ति-रहित केवल ज्ञान को 'तुषावघात' की उपमा दी गई है, जो केवल क्लेश-प्रद ही है।

श्रीशुकाचार्य जैसे ब्रह्मनिष्ठ, सर्वज्ञ, तत्त्व-ज्ञानी पुरुष भी जब वेदव्यास के मुख से भागवत का अध्ययन कर भगवच्चरित्र-सुधा-पान में प्रवृत्त हो गए, तो इससे तो यही दृढ होता है कि—ज्ञान की अपेक्षा भक्ति ही श्रेष्ठ तथा शीघ्र फलदायक है, और भगवान् श्रीकृष्ण ही वेद-प्रतिपादित परमतत्त्व हैं।

जो उपासक तत्तत्कल्प, तत्तत् मन्वन्तर अथवा तत्तत् युगों में प्रादुर्भूत मत्स्यादि भगवदवतारों की आराधना करते हैं, वे अपनी

दृढ निष्ठा और अनन्यभक्ति के द्वारा उसी रूप में सायुज्यभाव को प्राप्त होते हैं। इसके अतिरिक्त जो भक्त सर्ववेद-शास्त्र-पुराण-प्रतिपादित भगवान् श्रीकृष्ण की सर्वात्मभाव से आराधना करते हैं, उन्हें सारस्वतकल्पीय कृष्णावतार के भजनानंद का अनुभव ही फल-स्वरूप में प्राप्त होता है। इस कथन की पुष्टि—

> ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ॥
>
> देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥
>
> येषान्त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।
>
> ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥

इत्यादि गीता-श्लोकों से होती है। उपर्युक्त फल प्राप्त करनेवालों में अनेककल्प-पर्यन्त साधन करनेवाले अग्निकुमारों, श्रुतिरूप-गोपिकाओं एवं श्रीशुकाचार्य का ही मुख्य उल्लेख किया जाता है।

श्रुतिरूप-गोपिकाओं की कथा बृहद्वामनपुराण तथा अग्निकुमारों का वृत्तान्त कूर्मपुराण से अवगत होता है। "व्रजस्त्रीजनसम्भूतिः श्रुतिभ्यो ब्रह्मसङ्गता" इस आथर्वणी श्रुति से यह विदित है कि—अग्निकुमारों को मर्यादा-पुरुषोत्तम भगवान् रामचन्द्र के वरदान से द्वापर में गोपिका-भाव प्राप्त होकर भजनानन्द का फल प्राप्त हुआ था।

उपर्युक्त विवेचन से यह निर्णीत होता है कि—मत्स्यादि अवतार तथा अन्य देव-समुदाय अंश-कला-विभूतिरूप और भगवान् श्रीकृष्ण ही सर्ववेद-उपनिषद्-इतिहास (महाभारत)-गीता-

पुराणादिप्रतिपाद्य पूर्णब्रह्म परमात्म-स्वरूप हैं। भगवान् का चिदंश-स्वरूप जीव, उनके चरित्रात्मक श्रीभागवत तथा उपदेशात्मक गीता के द्वारा प्रतिपादित निष्काम, अनन्यभक्ति-योग के सदा अनुशीलन से शाश्वत-कल्याण प्राप्त करता है। वेदार्थ का निर्णय, उत्तरोत्तर-सन्देहवारक वेद-गीता-व्याससूत्र-समाधिभाषा (भागवत)-रूप प्रस्थानचतुष्टय की एकवाक्यता से अनायास ही होता है, इत्यादि।

भक्ति का यह सम्पूर्ण रहस्य सर्वप्रथम लोकपितामह ब्रह्मा को पूर्णपुरुषोत्तम भगवान् की कृपा से ज्ञात हुआ था। इसके अनन्तर नारद ने इसे प्राप्तकर लोक-हित-कामना से प्रेरित होकर कृष्णद्वैपायन वेदव्यास को इसका उपदेश दिया और उन्होंने शुकाचार्य के हृदय में इस रहस्य-सिद्धान्त की स्थापना कर भक्ति-मार्ग को प्रचालित किया। चिरकाल के अनन्तर कलियुग के जीवों के उद्धारार्थ भगवान् श्रीगोपीजनवल्लभ ने कृपा द्वारा श्रीविष्णुस्वामी को उपदेश देकर तिरोभूत भक्ति-मार्ग का तत्त्व समझाया था। विष्णुस्वामी के अनन्तर भक्तिप्रवर्तक, सर्वतत्त्वज्ञ अनेक आचार्यों की विद्यमानता से यह मार्ग अनेक वर्षों तक यथावस्थित प्रचलित रहकर बिल्वमङ्गलाचार्य के उपरान्त लोक में तिरोभूत हो गया। अन्त में श्रीहरि की प्रेरणा से योग द्वारा सात सौ वर्षों तक सूक्ष्म शरीर से स्थित रहकर बिल्वमङ्गल ने श्रीवल्लभाचार्य को इस मार्ग का आचार्य बनाया।

अखिल भूमण्डलाचार्यचक्र-चूडामणि, जगद्गुरु, भगवद्वदना-

नलावतार श्रीवल्लभाचार्य ने अवतार लेकर शतशः शास्त्रार्थों के द्वारा शुद्धाद्वैत ब्रह्मवाद-मत की स्थापना की, और श्रीकृष्णदेव-राय की विद्वत्सभा में आचार्य-पद पर आसीन होकर विष्णुस्वामि-सम्प्रदाय का भार स्वीकार किया। जिसके द्वारा भक्ति-भागीरथी की विमलधारा पुनः अविच्छिन्न रूप से प्रवाहित होकर लोक को पावन करने लगी। श्रीवल्लभाचार्य के अनन्तर उनके पुत्र गोस्वामी श्रीविट्ठलनाथजी ने अपने पितृचरणों के द्वारा उक्त भक्ति-मार्ग का रहस्य-ज्ञान प्राप्त कर उसका अत्यधिक विस्तार किया। सम्प्रति उनके पुत्र श्रीगिरिधरजी आदि भी अपने विद्या-वैदुष्य तथा सेवा-कथा-प्रचार से भूतल पर भक्ति-मार्ग की विजय-पताका फहराते हुए विराजमान हैं।

श्रीवल्लभाचार्य-चरणों ने भगवान् श्रीकृष्ण की प्रेरणा से विष्णुस्वामिसम्प्रदाय के भक्ति-मार्ग को पाँच सिद्धान्त-रत्नों से विशेष अलंकृत किया है। वे हैं—गुरुसेवा, भागवतार्थ (सुबो-धिनी), भगवत्स्वरूप-निर्णय, भगवत्सेवा (पूजामार्गीय उपासना से विलक्षण) तथा निरपेक्षता। वास्तव में इन्हीं पाँच अमूल्य सिद्धान्तों की विशेषता से इस भक्ति-मार्ग की उत्कृष्टता तथा निर्गुणता सिद्ध होती है। उक्त पाँच विशेष-सिद्धान्त ही भक्ति के मूल-स्वरूप एवं साधक के लिये सोपान-श्रेणी हैं। विशेषकर "हरिर्यत्करिष्यति, तथैव तस्य लीला" इस प्रकार की भावनामय निरपेक्षता (निष्कामता) तो इस भक्ति (पुष्टि)-मार्ग का देदीप्यमान मुकुट-हीरक ही है।

इसप्रकार द्विवेदी गदाधरभट्ट ने स्वरचित 'संप्रदाय-प्रदीप' के प्रथम प्रकरण में जीवों के सहज-कर्तव्य भक्ति का सोपपत्तिक निर्णय कर द्वितीय प्रकरण में विष्णुस्वामी के चरित का वर्णन किया है। तृतीय प्रकरण में प्रसङ्गोपात्त सर्वसम्प्रदायों की उत्पत्ति का प्रतिपादन कर चतुर्थ में श्रीवल्लभाचार्य के जीवन-चरित का संक्षिप्त किंतु आवश्यक वर्णन किया है। प्रस्तुत पञ्चम प्रकरण में भगवान् श्रीकृष्ण ही परमतत्त्व और परब्रह्म पूर्ण-पुरुषोत्तम हैं, यह शास्त्रीय प्रमाणों से विशदरीत्या विवेचन किया है।

ग्रंथकार ने उपसंहार में यत्किञ्चित् निवेदन के उपरान्त स्वकीय परिचय प्रदान करते हुए ग्रंथ की समाप्ति की है। वह निवेदन इस प्रकार है—

"परमकृपालु श्रीहरि की इच्छा से मेरे द्वारा प्रस्तुत 'सम्प्रदाय-प्रदीप' में जो कुछ सम्प्रदाय-विषयक वर्णन किया गया है, वह सत्य होवे।"

"जो महानुभाव 'अतिविमलप्रज्ञ' बनकर शास्त्रों का निर्णय एवं अपने शान्तहृदय में कुछ भी विचार किये विना ही साकार शुद्धब्रह्म भगवान् श्रीकृष्ण की भक्ति की अशास्त्रीयता, भगवत्कृत प्रपञ्च की असत्यता, जीव की व्यापकता और ब्रह्म की निराकारता का समर्थन करते हुए वेद-विपरीत सिद्धान्त का प्रति-पादन करते हैं, उनसे कुछ सुनने, कुछ विवाद करने एवं कुछ कहने की मुझे ( गदाधर को ) आवश्यकता नहीं है।"

"अर्बुदाचल में उत्पन्न द्विवेदी गदाधर ने वृन्दावन में राधिका-प्राणपति भगवान् श्रीकृष्ण की भक्ति से अपने चित्त को पवित्र करते हुए यथामति 'सम्प्रदाय-प्रदीप' की रचना की है। अतः उनके चरणानुग्रह से इस कार्य में कृतकृत्यता प्राप्त होवे।"

"अर्बुदाचल ( आबू पहाड़ ) से आग्नेय दिशा में 'अघोर' गिरि के समीप एकलिङ्ग-नामक शिवक्षेत्र से नैर्ऋत्य की ओर श्रीश्याम-सुन्दर भगवान् का एक प्रसिद्ध मन्दिर है। यहीं पर श्रीवल्लभाचार्य की सम्प्रदाय प्रणाली से भगवत्सेवा-कथा-प्रवचनादि करते हुए मेरे ( गदाधर के ) पुत्र-पौत्र रामदत्त आदि निवास करते हैं, वे सब भगवदनुकम्पा से सर्वदा सुख प्राप्त करें। श्रीमद्वल्लभनन्दन गोस्वामिश्रीविट्ठलनाथजी सदा कृपा-दृष्टि-वृष्टि करते हुए मेरे वंश को स्वकीय-सेवा में स्वीकार करते रहें।"

इति शुभम्

श्रीमन्नृपति-विक्रमादित्य-राज्यसंवत् १६१० में वृन्दावनस्थ श्रीगोविन्ददेव के सान्निध्य में द्विवेदी गदाधर ने सम्प्रदाय-प्रदीप की रचना समाप्त की।

'सम्प्रदाय-प्रदीप' का 'श्रीकृष्णाद्यब्रह्म-निर्णय'

नामक

पञ्चम प्रकरण का अनुवाद

समाप्त

# सम्प्रदायप्रदीपः

ग्रन्थकर्ता

पं० गदाधरदास द्विवेदी

———

रचना-काल—

सं० १६१० । वृन्दावनम्

॥ श्रीहरिः ॥

# सम्प्रदायप्रदीपः

## प्रथमं प्रकरणम्

श्रीगोपीजनवल्लभाय नमः

योऽनुग्रहार्थं श्रुतिगोपिकानां
गिरीन्द्रधर्ताऽजनि रासमध्ये ।
बभूव भूयः स कलौ कलेशः
स्वाम्यन्तविष्ण्वादिपदैकनामा ॥ १ ॥

स एव भूयोऽजनि वल्लभाख्यः
स्वकीयमाहात्म्यमवादि येन ।
नत्वा त्रिरूपं तमहं करोमि—
तत्सम्प्रदायक्रममुक्तपूर्वम् ॥ २ ॥

श्रीवल्लभस्या[1]त्मजविट्ठलेशे—
प्रशासति प्राणिहितैकहेतौ[2] ।
मार्गं तदीयं किल तस्य शिष्यो—
गदाभिधो वक्ति यथामतीदम् ॥ ३ ॥

---

१—आत्मया घ, ङ, च । २—हेतोः ख ।

बर्हापीडं मौलौ बिभ्रद्वंशीनादानातन्वानः ।
नानाकल्पः श्रीसम्पन्नो गोपस्त्रीभिः संवीतः ॥ ४ ॥
नेत्रानन्दं कुर्वन्कृष्ण ! त्वं चेदस्मान्वीक्षेथाः ।
सर्वे कामाः सम्पद्येरन्नस्माकं हृद्यासीनाः ॥ ५ ॥

तत्रादौ[1] पलादिकालमानम् । गुर्वक्षरषष्ट्या एकं पलमुच्यते । पलषष्ट्यैका घटी[2] भवति । घटीषष्ट्याऽहोरात्रं मनुष्याणाम् । त्रिंशद्भिरहोरात्रैर्मासः । मासैर्द्वादशभिर्वर्षम् । वर्षाणां सप्तदशलक्षैरष्टाविंशतिसहस्राधिकैः[3] कृतं भवति । द्वादशलक्षैः षण्णवतिसहस्राधिकैस्त्रेता । अष्टलक्षैश्चतुष्षष्टिसहस्राधिकैर्द्वापरः । चतुर्लक्षैर्द्वात्रिंशत्सहस्राधिकैः कलिर्भवति । एवं चतुर्युगम् । एकसप्ततिचतुर्युगैर्मन्वन्तर[4]माहुः[5] । चतुर्दशमन्वन्तरैर्ब्रह्मणो दिनम्[6] । तावत्येव रात्रिः । एतादृगहोरात्रैस्त्रिंशद्भिर्ब्रह्मणो मासः । मासैर्द्वादशभिर्वर्षम् । एवंविधवर्षशतं परमायुर्ब्रह्मणः ।

यथोक्तं ज्योतिःशास्त्रे—

"शतायुः शतानन्द एवं प्रदिष्टः
तदायुर्महाकल्प इत्युक्तमाद्यैः ।
अतोऽनादिमानेष कालस्ततोऽहं
न वेद्म्यत्र पद्मोद्भवा ये गतास्तान् ।"

१—तत्रादौ पलादिकालमानम् इति पाठः 'बर्हापीडं०' इति श्लोकात्पूर्वम् क, ग, घ, ङ, च । २—घटिका ङ, च । ३—( १७२८००० ) इत्याद्यङ्कलेखनिर्देशो विशेषः, तथाग्रेऽपि, घ, ङ । ४—मन्वन्तरमेकं ञ । ५—आह क, ग । ६—उच्यते इति विशेषः ट । स्यादिति विशेषः ञ ।

ब्रह्मणो वर्षशतेन मनुष्याणां द्विपरार्द्धवर्षाणि भवन्ति । परार्द्ध-संख्या गणकशास्त्रे—

"एकं दश शतमस्मात्सहस्रमयुतं ततः परं लक्षम् ।
प्रयुतं कोटिमथार्बुदमब्जं खर्वं निखर्वं च तस्मात् ॥
महासरोजं शङ्कुः सरितांपतिस्ततस्त्वन्त्यम् ।
मध्यं परार्द्धमाहुर्यथोत्तरं दशगुणं तज्ज्ञाः ॥"

तत्र चतुर्विधप्रलयः । यथोक्तं द्वादशस्कन्धे श्रीभागवते[१]—

"नित्यो नैमित्तिकश्चैव तथा प्राकृतिको लयः ।
आत्यन्तिकश्च कथितः कालस्य गतिरीदृशी ॥"

( अ० ४ श्लो० ३८ )

नित्यप्रलयलक्षणम्—

"नित्यदा सर्वभूतानां ब्रह्मादीनां परन्तप !
उत्पत्तिप्रलयावेके सूक्ष्मज्ञाः[२] सम्प्रचक्षते ॥"

( अ० ४ श्लो० ३५ )

नैमित्तिकलक्षणम्—

"चतुर्युगसहस्रन्तु ब्रह्मणो दिनमुच्यते ।
स कल्पो यत्र मनवश्चतुर्दश विशाम्पते !

( अ० ४ श्लो० २ )

तदन्ते प्रलयस्तावान्ब्राह्मी रात्रिरुदाहृता ।
त्रयो[३] लोका इमे यत्र कल्पन्ते प्रलयाय वै ॥ ३ ॥

---

१—श्रीभागवते इति नास्ति ट. । २—ज्ञानं प्र० क. ग. । ३—प्रायो घ. ङ. ।

एवं नैमित्तिकः प्रोक्तो प्रलयो यत्र विश्वसृक्।
शेतेऽनन्तासनो विश्वमात्मसात्कृत्य चात्मभूः॥ ४॥"

अथ [1] प्राकृतिकः—

"द्विपरार्द्धे त्वतिक्रान्ते ब्रह्मणः परमेष्ठिनः।
तदा प्रकृतयः सप्त कल्पन्ते प्रलयाय वै॥ ५॥
एष प्राकृतिको राजन्! प्रलयो यत्र लीयते।
आण्डकोशस्तु सङ्घातो विघात उपसादिते॥ ६॥"

अथात्यन्तिकलक्षणम् [2]—

"यदैवमेतेन विवेकहेतिना मायामयाहङ्करणात्मबन्धनम्।
छित्त्वाऽच्युतात्मानुभवोऽवतिष्ठते, तमाहुरात्यन्तिकमङ्गसंप्लवम् [3]॥

(अ० ४ श्लो० ३४)

ब्रह्मणश्चैकवर्षमध्ये त्रीणि शतानि षष्ट्यधिकानि भवन्ति प्रलयाः। नैमित्तिक [4] दैनन्दिननामानः प्रतिरात्रम्। सप्तम [5] पातालादारभ्य महर्लोकं यावद् ब्रह्मणः प्रतिदिनं पुनः [6] पुनः सुरासुरनरादीनां सृष्टिर्भवति। यथोक्तम्—

"तथावर्तमानस्य कस्यायुषोद्ध
गतं सार्द्धवर्षाष्टकं केचिदूचुः॥"

---

१—यथा घ. ङ.। २—अथात्यन्तिकः घ. ङ. च. ट.। आत्यन्तिक-प्रलयलक्षणं ख.। ३—संभवं ङ.। संस्तवं घ.। ४—नैमित्तिको दैनन्दिनमान घ. ङ. च.। नैमित्तिको, दैवदिनमानः ट.। ५—सप्त क. ख. ग.। ६—पुनः पुनः इति नास्ति ट.।

ब्रह्मणः स्वकीयमानेन ।—अथ[1] पञ्चाशद्वर्षाणि गतानि, अर्धं-वर्षञ्चायुरतिक्रान्तम् । अयंवर्षस्यान्तिमदिवसस्य श्वेतवाराह-कल्प इति संज्ञा ।

ब्रह्मणः प्रथमवर्षजन्मदिनादारभ्य ब्राह्मपाद्मादयो बहवः कल्पा व्यतीताः, तत्केन[2] सङ्ख्यातुं शक्यते ?

केचित्कल्पाः सात्त्विकाः, केचिद्राजसाः, केचित्तामसाः। सात्त्विकेषु विष्णोः सृष्टिर्भवति[3], राजसेषु ब्रह्मणः[4], तामसेषु रुद्रात्[5] । कदाचिद्भगवत्या रवेश्च । पुराणेष्वेवमनेकधा दृश्यते, तन्नासौ[6] विरोधः । तदस्मिन्[7] श्वेतवाराहकल्पाख्ये ब्रह्मणो दिवसे षण्मन्वन्तराणि व्यतीतानि[8]। (१) स्वायम्भुवः, (२) स्वारोचिषः, (३) उत्तमः, (४) तामसः, (५) रैवतः, (६) चाक्षुषः। अतीताः षडेते मनवः। वैवस्वतो वर्तमानः सप्तमः। अथ भविष्याः—(८) सावर्णिः, (९) दक्षसावर्णिः, (१०) ब्रह्म-सावर्णिः, (११) धर्मसावर्णिः, (१२) रुद्रसावर्णिः, (१३) देवसावर्णिः[9], (१४) इन्द्रसावर्णिः ।

तपः सत्यं दया दानमिति चतुष्पाद्धर्मः कृतयुगे बभूव, त्रेतायां त्रिपात्, द्वापरे द्विपात्, कलावेकपात् । ब्रह्मक्षत्रियवैश्यशूद्रा इति वर्णाः । ब्रह्मचारिगृहस्थवानप्रस्थयतय इत्याश्रमाः । एषां

---

१—अष्ट ञ. । २—तेषां इति विशेषः ञ. । ततः ट. । ३—भवति इति नास्ति क. ग. छ. । ४—ब्रह्मणः सृष्टि ख. ट. ५—रुद्रात्तामसेषु क. ख. ञ. ट. । ६—तस्मान्नासौ च. । ७—तत् इति नास्ति घ, ङ. च. । ८—अतीतानि घ. ङ. च. ट. । ९—वेदसावर्णिः क. ख. ग. ।

नित्यनैमित्तिककाम्यादिभेदेन धर्मो वेदेनोक्तः । अनुयुगमन्वन्तरं भगवदवतारो भवति । प्रतिमन्वन्तरं पृथगिन्द्राः, सप्त ऋषयश्च[१], इन्द्रानुयायिनो देवाश्च, मनुपुत्राश्च राजानः । वेदादिशास्त्रप्रवर्तका ऋषयः, त्रिलोकी शास्तारश्चेन्द्राः । अधर्मव्रातको भगवदवतारः । दण्डनीत्या धर्मपालका राजानः । अनुमन्वन्तरं प्रतिद्वापरमेकसप्ततिर्वेदव्यासा भवन्ति ।

अस्मिञ्छ्वेतवाराहकल्पे वैवस्वतमन्वन्तरे द्वापरे[२] पराशरात्मजः सत्यवतीनन्दनः कृष्णद्वैपायनो बभूव । येन वेदा व्यस्ताः, कृतञ्च वेदान्तशास्त्रम्, महाभारतञ्च श्रीभागवतञ्च । तस्माद्वेदव्यासमतमाश्रित्य द्वापरत इदानीन्तना अपि धर्मार्थकाममोक्षहरिभक्तिरिति पुरुषार्थपञ्चकं प्रवर्तयन्ति ।

कृतादिद्वापरान्तं धर्मार्थकाममोक्षाणां प्रवृत्तिः । कलौ हरिभक्तिरेव पुरुषार्थः । धर्मश्चैकपात् । कृते त्रेतायामन्येषामृषीणां मतमाश्रित्य धर्मादय आसन्, अन्येषामवताराणां मत्स्य[३]नृसिंहरामादीनां भक्तिः कलौ कृष्णभक्तिरेव, वेदव्यासस्याभीष्टदैवतत्वात् ।

"कलौ देवो महेश्वरः," "कलौ चण्डीविनायकौ", "कलौ रामेति कीर्तनम्" इति पुराणेषु यद्दृश्यते, तत्सत्यम् । परं नायं कलिः, अन्ये ते कलयो भूता भविष्या वा ।

---

१—च इति नास्ति क. ख. ग. छ. । २—अष्टाविंशतितमे द्वापरे इति विशेषः क. ख. ग. ज. झ. ट. । ३—मत्स्यकच्छपनृसिंह ख. ग. छ. च. छ. ।

श्वेतवाराहकल्पे वैवस्वतमन्वन्तरेऽष्टाविंशतितम[1]कलिविषयो ब्रह्माण्डपुराणोक्तो द्रष्टव्यः—

"कलौ दशसहस्रेण विष्णुस्त्यक्ष्यति मेदिनीम् ।
तदर्द्धे[2] जाह्नवीतोयं तदर्द्धे सर्व[3]देवताः ॥"

कृतादिद्वापरान्तं ये वेदोक्तवर्णाश्रमेतरधर्मपरा बभूवुः तेषां धर्मस्त्रिधा फले[4] भिन्नः । ये स्वधर्मदोग्धारः स्वर्गाद्यभिलाषिणः, कलेरादितः समाप्तिपर्यन्तं स्वर्गसुखं भोक्ष्यन्ति । ये मुमुक्षवस्ते निष्काम[5]स्वधर्मतो वैराग्यपूर्वकज्ञानयोगेन[6] साङ्ख्यवेदान्तयोग-शास्त्रवैष्णवशैवोक्तमार्गेण नानाविधं मोक्षं प्राप्ताः । येत्वेतत्क-लेर्गुणज्ञास्ते[7] कलेराद्यदशाब्दसहस्रवर्षमध्येऽवतारमिच्छन्ति । यथोक्तं श्रीभागवत एकादशस्कन्धे—

"कलिं सभाजयन्त्यार्या गुणज्ञाः सारभागिनः ।
यत्र सङ्कीर्तनेनैव सर्वः स्वार्थोऽभिलभ्यते ॥
(अ० ५ श्लो० ३६)

कृते यद्ध्यायतो विष्णुं त्रेतायां यजतो मखैः ।
द्वापरे परिचर्य्यायां कलौ तद्धरिकीर्तनात् ॥ ५२ ॥
कलेर्दोषनिधे राजन्नस्ति ह्येको महान्गुणः ।
कीर्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत् ॥ ५१ ॥"
(स्कं० १२ अ० ३)

---

१—तमे कलौ घ. ङ. च. छ. ज. ञ. ट । २—तदर्धं ख. च. छ. । ३—ग्राम च. छ. । ४—फलं भिन्नं घ. ङ. च. । फलं च भिन्नं छ. । ५—निष्कामाः ज. । ६—योगे क. ग. । ७-८—ते दश इति नास्ति क. ख. ग. ज. ।

तत्रैव ( भा० ११ स्कं०, ५ अ० )

"कृतादिषु प्रजा राजन्कलाविच्छन्ति सम्भवम् ।
कलौ खलु भविष्यन्ति नारायणपरायणाः ॥ ३८ ॥
क्वचित्क्वचिन्महाराज ! द्रविडेषु च भूरिशः ।
ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी ॥ ३९ ॥
कावेरी च महापुण्या प्रतीची च महानदी ।
ये पिबन्ति जलं तासां मनुजा मनुजेश्वर ! ॥
प्रायो भक्ता भगवति वासुदेवेऽमलाशयाः ॥ ४० ॥"

वेदोक्तयज्ञभागभुजो देवाः, ब्रह्मरुद्रशक्तिगणपतिवस्वा१-दित्यसाध्यविश्वेदेवादयो ब्रह्माण्डपुराणोक्तकालं यावत्तिष्ठन्ति । कलौ गङ्गा२ च, उत्कलदेशे सागरतीरे३ पुरुषोत्तमक्षेत्रे श्रीजगन्नाथरूपेण विष्णुश्च । तावत्कालं कलौ वैष्णवा अवतरन्ति । श्रीकृष्णादन्यदेवताभक्तस्य४ ततः कलौ सिद्धिर्न भवति । शून्य५-मन्दिरं प्राघूर्णिकवत्६ । धर्मस्य७ सिद्धिस्तादृशी न भवति, धर्मस्यैकपादत्वात्८ । तस्माद्यथोक्तं श्रीवल्लभैरेव९—

"सर्वमार्गेषु१० नष्टेषु कलौ च खलधर्मिणि ।
पाखण्डप्रचुरे लोके कृष्ण एव गतिर्मम ॥ १ ॥"
( कृष्णाश्रये )

---

१—गणपत्यादित्य घ. ङ च. । २—गङ्गा भागीरथी च । ३—सागरतीरे इति नास्ति ख । सिन्धुतीरे घ. ङ. च. छ. । ४—भक्तानां छ. । ५—शून्यं घ. ङ. च. । ६—प्राघूर्णवत् ख. । ७—धर्मस्येत्यारभ्य न भवति—इत्यन्तं नास्ति ञ. ट । ८—पदत्वात् क. । ९—श्रीवल्लभेन क. ख. ग. ञ. ट. । १०—धर्मेषु क. ख. ग. ञ ।

जनैकालका म्लेच्छकौलिकादयो[१] बहवः पाखण्डा वेदमार्गाद्बहिः कलौ भवन्ति निरयदाः। यथोक्तं विष्णुपुराणे[२] धर्मोत्तरे—

"कृतादिद्वापरान्तञ्च जन्मभाजो हि जन्तवः।
भवन्ति जन्मभाजस्ते यावत्कालं कलिर्व्रजेत्॥
भवन्ति ये कलौ जीवास्ते वै निरयगामिनः।
कृतादिद्वापरान्तं वै कालं नास्त्यत्र संशयः॥"

कलेरादौ दशसहस्रवर्षमध्येऽवतीर्णा त्रिधा जन्तवो भवन्ति।

"कर्मणा मनसा वाचा श्रीकृष्णं सम्भजन्ति ये[३]।
सम्प्रदाया[४]द्गुरोर्वाक्यात्ते विष्णोर्न कलेर्नराः॥"

इति स्कन्दवाक्यात्।

"वेदोक्तधर्महीनत्वात्सर्वे निरयगामिनः।
अनाश्रित्य हरिं जीवाः कलौ पाखण्डसङ्कुले॥
केचिद्विष्णोः पदं यान्ति धर्मस्यैकपदाश्रये॥"

स्वर्गं बहूनां[५] मध्ये कोऽपि यास्यति, अन्ये सर्वेऽपि निरयगामिनः। इति त्रैविध्यमुक्तम्। यथोक्तं[६] ब्रह्मवैवर्त्ते—

"यवाकारः कलिर्ज्ञेयः कालरूपेण केवलम्।
सपुच्छस्तु यवो ज्ञेयः पुच्छं शुष्क[७]मिति स्मृतम्॥ १॥

१—लौकिकादयो ख. घ. ङ. च. छ. ट.। २—विष्णुधर्मोत्तरे क. ख. ग. ट.। ३—हि क. ख. ग.। ४—दायगुरोः ख. घ. ज. ट. दायिगुरोः ङ. च. छ. ञ.। ५—जीवानां इति विशेषः छ.। ६—यथोक्तं इति नास्ति घ. ङ. छ.। ७—शूक क. ग.।

आद्यं दशसहस्रं तु[1] यवरूपं प्रकीर्तितम् ।
तदूर्ध्वं पुच्छसंज्ञं स्यात्कलिकालं तु नीरसम् ॥ २ ॥
तुषाधिकोऽल्पसत्त्वश्च ह्यादावन्ते यवो भवेत् ।
सत्त्वाधिको मध्यभागे पुच्छे सारांशवर्जितः ॥ ३ ॥
एवमादिकलिदु ष्टो धर्मराजो दिवङ्गतः ।
गतः स कृष्णो धर्मस्य ग्लानिरासीत्क्रमात्ततः ॥ ४ ॥
पञ्चवर्षसहस्रान्तमेवं मध्यं प्रकीर्तितम् ।
सधर्मो[2] भगवद्भक्तिस्ततः कालेन वर्द्धते ॥ ५ ॥
ततो वर्षायुतस्यान्तं यवस्यान्तं वदन्ति हि ।
तत्र भक्तिश्च धर्मश्च क्रमादन्तं व्रजिष्यति ॥ ६ ॥
पुष्करादीनि[3] तीर्थानि गङ्गाद्याः सरितस्तथा ।
सप्तपुर्यश्च शैलेन्द्रा अगम्या मानुषैस्ततः ॥ ७ ॥
भविष्यन्ति कलौ घोरे ह्याद्यवर्षायुतात्परम् ।
रक्षांसि तेषु स्थास्यन्ति दुष्टश्वापदरूपतः ॥ ८ ॥"

एवं श्रीमन्नृपतियुधिष्ठिर-राज्यसमयाद्दशसहस्रवर्षपर्यन्तं कलौ भागवता भवन्तीति[4] सिद्धम् ।

ननु वर्णाश्रमोक्त-नित्यनैमित्तिकविधानशून्ये कलौ भागवतानां

---

१—सहस्रेषु ख. । २—स्वधर्मो घ. ङ. च. छ. । ३—राद्यानि घ. ङ. छ. । ४—भविष्यन्तीति ज. ।

तदकरणे प्रत्यवायो न स्यात्, वा भविष्यति ? न स्यादिति, श्रीभागवत एकादशस्कन्धे कलिविषये वाक्यानि—

"देवर्षिभूतात्मनृणां पितॄणां[1]
न किङ्करो नायमृणी च राजन्!
सर्वात्मना यः शरणं शरण्यं
गतो मुकुन्दं परिहृत्य कृत्यम् ॥"
(अ० ५ श्लो० ४१)

तत्रैव[2]—

"तावत्कर्माणि कुर्वीत न निर्विद्येत यावता ।
मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ॥"

पुनश्च—

"ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वाऽनपेक्षकः ।
सलिङ्गानाश्रमाँस्त्यक्त्वा चरेदविधिगोचरः ॥"

बुद्धिपूर्वकं[3] निषिद्धाचरणं नैवाचरन्ति भागवताः, पर[4]मीश्वरेच्छया । निषिद्धाचरण ईश्वरशरणं गतानामीश्वर एव प्रत्यवायं निवारयति । यथोक्तं भगवद्गीतासु—

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ ६१ ॥

---

१—नृणाञ्च किङ्करो, न विद्यते नाय० घ. ङ. च. । २—तत्रैवं ङ ।
३—बुद्धिपूर्वं क. ग. घ, ङ. च. । ४—परन्तु ख. ब. ङ. च. छ. ज. झ. ट. ।

तमेव शरणं गच्छ सर्वभावेन भारत !
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥"
(अ० १८।६२)

मत्तोऽन्य[१]मीश्वरं ज्ञास्यतीति मत्वा पुनर्भगवतोक्तम्—

"मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ ६५ ॥
सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज[२] ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६६ ॥

तत्रैव च—

"अपिचेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः" ॥ (९-३०)

पुनरेकादशस्कन्धे—

"स्वपादमूलं भजतः प्रियस्य[३]
त्यक्त्वाऽन्यभावस्य हरिः परेशः ।
विकर्म यच्चोत्पतितं कथञ्चिद्
धुनोति सर्वं हृदि सन्निविष्टः ॥ ४२ ॥"
(भा० स्कं० ११ अ० ५)

तत्रैव च—

"यदि कुर्यात्प्रमादेन योगी कर्म विगर्हितम् ।
योगेनैव दहेदंहो नान्यद्यत्नं कदाचन ॥"

---

१—ततोऽन्य घ. ङ. च. छ. । २—व्रजेत् क. ग. । ३—परस्य ख. ।

योगास्त्रयो ज्ञानकर्मभक्त्याख्याः । अन्यद्यत्नं प्रायश्चित्तादि ।

इति श्रीसम्प्रदायप्रदीपे[1] विष्णुस्वामिस्नेहपात्रे[2]
बिल्वमङ्गलावर्त्तौ, श्रीवल्लभदीपशिखे,
तन्मार्गपथिकजन-तमोनिवृत्तौ
प्रथमं प्रकरणम्

---

१—दीपके, श्रीवल्लभदीपशिखे, तन्मार्गकथनंनाम प्रथमं॰ घ. ङ. च. छ. । २—सुपात्रे क. ।

# द्वितीयं प्रकरणम्

उक्तञ्च—

> उत्पन्ना द्राविडे भक्तिर्वृद्धिं कर्णाटके गता।
> क्वचित्क्वचिन्महाराष्ट्रे गुर्जरे प्रलयं गता ॥ १ ॥

युधिष्ठिरराज्य-समयात्किञ्चित्कलौ गते द्राविडेषु[1] कश्चिद्राजा बभूव। येन धर्मेणाखिलं भारतवर्षं वशीकृतम्। तस्य राज्ञः सकल-भारधौरेयः सचिवो ब्राह्मणो बभूव। तस्य ब्राह्मणस्यात्मजो विष्णु-स्वाम्यासीत्। स च श्रीशुकवागमृताब्धीन्दोः श्रीगोपीजनवल्लभस्यांश एव, 'यो यदंशः स तं भजेत्' इति वाक्यात्। रूपेण[2] कामः, वेदार्थविद्यया चतुर्मुखः, बुद्ध्या च बृहस्पतिः, धन-वान्यथा धनदः, भोगवान्यथा पुरन्दरः। किमधिकम्? वेदोपवेदेति-हास-पुराणोपपुराण-स्मृत्युपस्मृति - वेदाङ्गसाङ्ख्ययोगवेदान्त-मीमांसकवैष्णवशैवतन्त्रादिवेत्ता, यथा कृष्णद्वैपायनः, साहित्य-वात्स्यायनादिषु च।

यथोक्तं पाद्मे—

> "यदा भागवती सृष्टिः क्षितौ भवति वै तदा।
> अंशेन भगवान्विष्णुः स्वात्मानं सृजति स्वयम्[3] ॥

---

१—विक्रमपूर्वजः—इति विशेषः ज.। २—साक्षाद्रूपेण काम इव प. कृ. र.। ३—प्रभुः ज.।

तमाश्रित्य जनाः सर्वे भक्तिभाजो भवन्ति हि।
मेढीस्तम्भे बलीवर्दा यथाश्रित्य[१] भ्रमन्ति च॥
चत्वारस्ते कलौ भाव्याः सम्प्रदायप्रवर्तकाः।
भविष्यन्ति प्रसिद्धास्ते ह्युत्कले पुरुषोत्तमात्॥"

तस्य श्रीविष्णुस्वामिनः कदाचिन्मनसि विचारः समजनि, कथमहं पितुरधिको गुणैर्भवेयम्? राजसेवया भविष्यामि? सम्प्रति भूमण्डले यादृशोऽस्मद्देशे राजाऽस्ति तादृशोऽन्यो नास्ति। सचिवेषु राज्ञः सम[२]मस्मत्पिताऽनुग्रहपात्रं यथास्ति, तादृशः सचिवोऽन्यो नास्ति। अतः सेवार्थं देवेषु कोऽपि मृग्यः। तर्हि राजराजो धनदः सेव्यः स्यात्? सोऽपीन्द्रानुयायी, तर्हीन्द्रः सेव्यः? सोऽपि[३] रुद्रानुवर्ती, अन्येऽपि यमाग्निवरुणादयश्च। तर्हि रुद्रः सेव्यः? तस्याऽपि पितृत्वेन[४] मान्यत्वे ब्रह्माऽस्ति। 'तमब्रवीन्महादेवोऽसि' इति श्रुतेः। तर्हि ब्रह्मैवेश्वरः सेव्यश्च? ब्रह्माऽपि श्रीनारायणनाभिपद्म-लब्धजन्मा श्रूयते। तर्हि नारायण एव सर्वेश्वरेश्वरः[५] सेव्य इति सिद्धम्। सोऽपि मत्स्याद्यवतारैरवतीर्य स्वात्मनो[६]ऽन्यमीश्वरं मन्यमान इव जपन्[७] यजन् भजन् ध्यायञ्छ्रूयते च पुराणेषु परतन्त्र इव। अतोऽहं[८] सर्वतोधिकः कं सर्वे[९]श्वरे-

---

१—यदाश्रित्य क. ग.। २—स मम पिता ञ.। ३—इन्द्रोऽपि ञातिरिक्तेषु। ४—पितृत्वे क. ग. ञ. ट.। पितृत्वे ब्रह्मा घ. छ. ञ.। ५—सर्वेश्वर इति सिद्धम् घ. छ. ञ. ट.। ६—आत्मानमीश्वरं ख. ञ.। ७—जपन्भजन् क. ग. ञ.। ८—अतः सर्वतोऽधिकोऽहं क. ग. ज. ञ. ट.। ९—कमीश्वरेश्वरम् घ. ङ. छ.।

श्वरमाराद्धय भविष्यामीति निश्चयं न जगाम । पुनःपुनश्च विचारवानभूत् ।

तत्र१ वेदमूलशास्त्रेषु गरीयांसो वेदाः, वेदेष्वुपनिषदः, उपनिषत्सु बृहदारण्यकम् ।

"माध्यन्दिनीति या शाखा सर्वासाधारणा स्मृता" इति स्मृतेः ।

अतो यजुर्वेदस्योपनिषदि यः सर्वेश्वर इत्युक्तः, स मे प्रभुः सेव्यश्च ।

"स वा अयमात्मा सर्वस्यवशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति, यदिदं किञ्च, न साधुना कर्मणाभूयान्नो वा कनीयान्, एष भूताधिपतिरेष लोकेश्वर एष लोकपालः स सेतुर्विधरण एषां लोकानामसम्भेदाय"२ ।

इति सत्यकामं, सत्यसङ्कल्पं, सर्वज्ञं सर्वगं३मचिन्त्यानन्तशक्तिं, भक्तवत्सलं, कृतज्ञं, जगदीश्वरं सर्वा अप्युपनिषदो वदन्ति । परन्तु तस्य नामरूपादि न ज्ञायते, कथं तं भजामि ? इत्यमुह्यत । राजसेवा महाराजोपचारेणैव भवति, अत्रोपनिषदुक्ते सर्वेश्वरे नामरूपाभावे कथं४ भक्तिः कीर्तिश्च ?

भवतु नाम, यथा महाराज५सेवकैर्महाराजोपचारविधिना महाराजः सेव्यते, तथाऽदृष्टरूपमपि जगदीश्वरं परिचरिष्यामि । सर्वज्ञो भक्तवत्सलः कृपालुः श्रुतौ पठितः, अतो दर्शयिष्यति६

---

१—तत्र इति नास्ति क. ख. ग. ज. ञ. ट. । २—असंभवाय ब. । ३—सर्वरूपम् घ. च. छ. । ४—का, घ. च. छ. ट. । ५—महाराज कुमारः सेव्यते—इत्येव पाठः ब. । ६—दर्शयति घ. च. छ. ।

स्वरूपम् । इति हृदि१ निश्चित्य भजनारम्भं कृतवान् । मत्स्वामिनोऽर्थे गृहारामताम्बूलजलाशय२शय्या-सिंहासनछत्रचामर-पादुकाचन्दनकर्पूरकस्तूरीसुगन्धागुरुजलपानपात्रधूपदीपनीराजन-शयनभोजनविहारसभास्थान-रथनरवाहनाश्वगजजवनिकावितानक्रीडोपस्करादि३ सर्वमिति चकार । अरुणोदयादारभ्य क्रमेण महाराजसेवक४न्यायेन, प्रतिबोध५दन्तधावनकेशमार्जनादि६महाभोगपर्यन्तमनुदिनं चकार७ । परं भगवान्न गृह्णाति । अगृहीते भोजनादौ पश्चात्तापं चकार । पश्चादिति निश्चितवान् । अहो ! यावन्मत्कृतां सेवां साक्षाद्भूत्वा न गृह्णाति तावदहं न भोक्ष्ये, न पयः पास्यामि ।

अनुदिनं भगवदर्थं यद्भोजनादिकल्पितं भगवता न गृहीतं जलाशये क्षिपति स्म । एवं षड्दिनान्यतीतानि । कृतेऽस्थिषु भग्नेषु प्राणत्यागः, त्रेतायां मांसाद्यगमे, द्वापरे रुधिरक्षये, कलावन्नाद्यभावे । एवं कलिकलेवरत्वात्क्षुत्तृड्भ्यां शरीरं ग्लानिमवाप । ततः स्वगतमिदमाह—

अहो ! श्रुतिवाक्यप्रामाण्येनेश्वरोऽस्त्येव सर्वज्ञः कृपालुः९ पठितः, स १० कथं मत्कृतां सेवां न गृह्णाति ? ज्ञातं कोपि ११ मयि

---

१—हृदीति निश्चित्य क. ख. ग. ज. ट. । २—ताम्बूलासन घ. । ३—स्करादि ख. घ. च. । ४—सेवकवद्भक्त्याशयेन ख. । ५—प्रतिबोध्य घ. । ६—केशसंमार्जन, ख. ञ. । ७—करोति स्म, ख. ञ. । ८—मांसाद्यपगमे ञ. मांसविगमे ज. । ९—भक्तवत्सलः इत्यधिकः ख. । १०—स. इति नास्ति आतिरिक्तेषु ञ. । ११—मयि कोऽपि ख ।

शारीरो दोषो वर्तते। अतः परं १ क्लेशेनाऽपि दिनमेकं सेवां करोमि २। यदि भगवान्न गृह्णाति तदाग्निप्रवेशं करिष्यामीति निश्चित्य सप्तमे दिवसे भजनं कर्तुमारब्धम्। यथास्थानं सेवा-साधनानि स्थापयित्वा३ कपाटे पिधाय बहिः स्थितः। ततो गृहान्त-र्भगवानाविर्बभूव ४ सेवकजनेन सह। शृङ्गारस्थाने शृङ्गार-साधनानि स्वीकृतानि, ततो भोजनस्थाने भोजनं कृतं, शयन-स्थाने५ शयनमपि कृतम् ६। बहिःस्थितेन विष्णुस्वामिना ज्ञातं। द्वारमुद्घाट्य गृहान्तःसमागतो भगवन्तं ददर्श।

सन्तं वयसि कैशोरे द्विभुजं पीतवाससम्।<br>
नवीननीरदश्यामं पद्मगर्भारुणेक्षणम् ॥ १ ॥<br>
रुचिरोष्ठ७ पुटन्यस्तवेणुवादनतत्परम्।<br>
शिखिपिच्छावतंसेन शोभितं वनमालया ॥ २ ॥<br>
हारकङ्कणकेयूरमुद्रिकाभिरलङ्कृतम्।<br>
सुन्दरं निम्ननाभिञ्च हेममेखलया युतम् ॥ ३ ॥<br>
स्फुरन्८नूपुरझङ्कारं वीरं श्रीरसिकं मुदा।<br>
कल्पित९ द्व्यष्टशृङ्गारं रसमूर्तिं मनोरमम् ॥ ४ ॥<br>
पीतोत्तरीयसंवीतं त्रिभङ्गि१०ललिताकृतिम्।<br>
गल्ल११मण्डलसंसर्गिलसत्काञ्चनकुण्डलम् ॥ ५ ॥

---

१—परमक्लेशेन ब.। २—करिष्यामि ख.। ३—स उपस्थाप्य ब.। ४—आविर्भूतः ब.। ५—शयनस्थाने इति नास्ति क. ख. ग. ब.। ६—स्वीकृतं म.। ७—रौष्ठ ख.। ८—स्फुट नूपुर, ज.। ९—काञ्ची-नाथट, ट.। १०—त्रिभङ्ग, ब. म. ट.। ११—गण्ड ख. ब.।

तुङ्गगुल्फारुणनखव्रातदीधितिभिश्चितम्१ ।
पाणिपादतले पद्मपत्रारुणतयाऽन्वितम् ॥ ६ ॥
२सव्यं दक्षिणतो देव्यौ तप्तकाञ्चनसन्निभे ।
वयोरूपगुणोपेते दृष्ट्वोवाच मुदान्वितः ॥ ७ ॥

भगवन्! शास्त्रदृष्ट्या त्वां सगुणं जाने। मयोपनिषदुक्तसर्वेश्वरस्यार्थे या सेवा कल्पिता, असौ निर्गुणः। त्वया स्वीकृता मत्कृता सेवा? वैदिकतान्त्रिक३मार्गेण ये त्वामीदृग्विधरूपं भजन्ति न मम तत्र सर्वेश्वरत्व४बुद्धिः। अत्र सन्देहनिराकरणं५ त्वयैव भवति। संशयं छिन्धि, मां शाधि६, शास्त्रसम्मत्याऽऽत्मानं प्रमाणीकुरु, पश्चात्त्वां प्रणमामि।

श्रीभगवानुवाच—सौम्य! मत्तोऽन्य७ ईश्वरस्तव कोऽप्यस्ति? तेन त्वत्कृता सेवा कथं न गृहीता, मया चौर८धर्मेण गृहीता चेत्तर्हि९ कथं न रक्षिता। अद्यापि तं विज्ञापय, यो मे दण्डं दास्यति।

इति श्रुत्वा पुनर्भगवन्तमाह—देव! सर्वात्मना त्वां प्रपन्नोऽस्मि। त्वत्कृपया मदीयः संशयश्छिन्नः। त्वत्तोऽन्य ईश्वरो नास्ति। शास्त्रसम्मत्या स्वकीयमाहात्म्यं कथय।

---

१—निश्चितं—घ. छ. ट.। भिवृंतम् ख. ञ.। २—श्लोकोऽयं नास्ति—क. ग.। ३—तान्त्र—घ. च.। तन्त्र—छ.। ४—सर्वेश्वरबुद्धिः—नातिरिक्तेषु। ५—सन्देहनिराकरणे त्वयैव सन्देहनिवृत्तिः ट.। ६—मां शाधि इति नास्ति—घ. ङ. च. छ. ञ. ट.। ७—मत्त ईश्वरस्तु न कोप्यस्ति—घ. ङ. च. छ.। ८—चौर्य घ. ङ. च. छ.। ९—तर्हि इति नास्ति छ.।

श्रीभगवानाह[1]—सौम्य ![2] सर्वेश्वरेश्वरो[3]ऽहमस्मि । ताव-दुपनिषत्सम्मत्या श्रृणु—

"कृष्णोऽयं साक्षाद्ब्रह्म" इति श्रुतेः । तथाथर्वणोपनिषदि[4]—"कृष्णो वै परमं दैवतं", "गोविन्दान्मृत्युर्बिभेति", "श्रीगोपीजन-वल्लभो भुवनानि दध्रे" इति । तत्रैव च—"अनेजदेकं मनसो जवीयो नैतद्देवा आप्नुवन्पूर्वमर्शन्", "तत्कृष्ण एव परो देवः, तं ध्यायेत्तं नमेत्तं भजेदिति श्रुतेः"

अन्यच्च—

"कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते ॥"

इति गोपालतापिन्याम् । तथोक्तं बृहद्वामनपुराणे उत्तरस्थाने[5] खिले च । भृग्वादीन्प्रति ब्रह्मणो वाक्यानि—

षष्टि[6]वर्षसहस्राणि मया तप्तं तपः पुरा ।
नन्दगोपव्रजस्त्रीणां पादरेणूपलब्धये ॥ १ ॥
तथापि न मया प्राप्तास्तासां वै पादरेणवः ।
श्रुत्वैतद् ब्रह्मणो वाक्यं भृगुः प्राहाथ सादरम् ॥ २ ॥
वैष्णवानां पादरजो गृह्यते त्वद्विधैरपि ?
सन्ति ते बहवो लोके वैष्णवा नारदादयः ॥ ३ ॥

---

१—उवाच—घ. ङ. च. छ. । २—सौम्य इति नास्ति ज. । ३—सर्वेश्वर—घ. ङ. च. छ. ज. । ४—तथेत्यारभ्य—दध्रे इत्यन्तं नास्ति क. ग. । ५—उत्तरस्थानेखिले च—इति नास्ति घ. ङ. च. छ. । ६—षष्टिवर्षेत्यादि त्रिंशच्छ्लोकाः—न सन्ति ख. जातिरिक्तेषु ।

तेषां विहाय गोपीनां पादरेणुस्त्वयाऽपि यत् ।
गृह्यते, संशयो मेऽत्र को हेतुस्तद्वद प्रभो ! ॥ ४ ॥
ततो ब्रह्मा भृगुं प्राह चिन्तयित्वा पुरातनीं ।
कथां, सर्वश्रुतीनां यद्रहस्यं परमाद्भुतम् ॥ ५ ॥

ब्रह्मोवाच —

न स्त्रियो व्रजसुन्दर्यः पुत्र ! ताः श्रुतयः किल ।
नाहं शिवश्च शेषश्च श्रीश्च ताभिः समः क्वचित् ॥ ६ ॥
प्राकृते प्रलये प्राप्ते, व्यक्तेऽव्यक्तं गते पुरा ।
शिष्टे ब्रह्मणि चिन्मात्रे कालमायातिगेऽक्षरे ॥ ७ ॥
ब्रह्मानन्दमयो लोको व्यापिवैकुण्ठसंज्ञकः ।
निर्गुणोऽनाद्यनन्तश्च वर्तते केवलेऽक्षरे ॥ ८ ॥
अक्षरं ब्रह्म परमं वेदानां स्थानमुत्तमम् ।
तल्लोकवासी तत्रस्थैः स्तुतो वेदैः परात्परः ॥ ९ ॥
चिरं स्तुत्या ततस्तुष्टः परोक्षं प्राह तान्गिरा ।
"तुष्टोऽस्मि ब्रूत भो प्राज्ञा ! वरं यन्मनसीप्सितम्" ॥ १० ॥

श्रुतय ऊचुः—

नारायणादिरूपाणि ज्ञातान्यस्माभिरच्युत !
सगुणब्रह्म सर्वेदं, वस्तुबुद्धिर्न तेषु नः ॥ ११ ॥
ब्रह्मेति मन्यतेऽस्माभिर्यद्रूपं निर्गुणं परम् ।
वाङ्मनोगोचरातीतं ततो न ज्ञायते तु तत् ॥ १२ ॥
आनन्दमात्रमिति यद्वदन्तीह पुराविदः ।
तद्रूपं दर्शयास्माकं यदि देयो वरो हि नः ॥ १३ ॥

श्रुत्वैतद्दर्शयामास स्वं लोकं प्रकृतेः परम् ।
केवलानुभवानन्दमात्रमक्षरमध्यगम् ॥ १४ ॥
यत्र वृन्दावनं नाम वनं कामदुघैर्द्रुमैः ।
मनोरमं निकुञ्जाढ्यं सर्वर्तुसुखसंयुतम् ॥ १५ ॥
यत्र निर्मलपानीया कालिन्दी सरितांवरा ।
रत्नबद्धोभयतटा हंसपद्मादिसङ्कुला ॥ १६ ॥
यत्र गोवर्द्धनो नाम सुनिर्झरदरीयुतः ।
रत्नधातुमयः श्रीमान्सुपक्षिगणसङ्कुलः ॥ १७ ॥
नानारासरसोन्मत्तं यत्र गोपीकदम्बकम् ।
तत्कदम्बकमध्यस्थः किशोराकृतिरच्युतः ॥ १८ ॥
दर्शयित्वेति च प्राह—ब्रूत किं करवाणि वः ?
दृष्टो मदीयो लोकोऽयं यतो नास्ति परं वरम् ॥ १९ ॥

श्रुतय ऊचुः—

कन्दर्पकोटिलावण्ये त्वयि दृष्टे मनांसि नः ।
कामिनीभावमासाद्य स्मरक्षुब्धान्यसंशयम् ॥ २० ॥
यथा त्वल्लोकवासिन्यः कामतत्त्वेन गोपिकाः ।
भजन्ति रमणं मत्वा, चिकीर्षाऽजनि नस्तथा ॥ २१ ॥

श्रीभगवानुवाच—

दुर्लभो दुर्घटश्चैव युष्माकं सुमनोरथः ।
मयाऽनुमोदितः सम्यक् सत्यो भवितुमर्हति ॥ २२ ॥
आगामिनि विरञ्चौ तु जाते सृष्ट्यर्थमुद्यते ।
कल्पं सारस्वतं प्राप्य व्रजे गोप्यो भविष्यथ ॥ २३ ॥

पृथिव्यां भारते क्षेत्रे, माथुरे मम मण्डले।
वृन्दावने भविष्यामि प्रेयान्वो रासमण्डले॥ २४॥
जारधर्मेण सुस्नेहं सुदृढं सर्वतोऽधिकम्।
मयि सम्प्राप्य, सर्वेऽपि कृतकृत्या भविष्यथ॥ २५॥

ब्रह्मोवाच—

श्रुत्वैतच्चिन्तयन्त्यस्ता रूपं भगवतश्चिरम्।
उक्तं कालं समासाद्य गोप्यो भूत्वा हरिं गताः॥ २६॥
स्त्रियो वा पुरुषो वाऽपि भर्तृभावेन केशवम्।
हृदि कृत्वा गतिं यान्ति श्रुतीनां, नात्रसंशयः॥ २७॥
तासां पादरजोऽस्त्येव नित्यं वृन्दावने भुवि।
तत्प्राप्य तत्कामनया यान्त्यहो गोपिकागतिम्॥ २८॥
नन्दगोपव्रजस्त्रीणामतः पादरजो मया।
वाञ्छितं पुत्रकाः! सम्यक्, तावत्यः श्रुतयो मताः॥ २९॥
श्रुत्वैतदृषयो वाक्यं ब्रह्मणः परमेष्ठिनः।
सर्वात्मना प्रपन्नास्ते श्रीगोपीजनवल्लभे[१]॥ ३०॥

पुनर्भगवता विष्णुस्वामिनं प्रत्युक्तम्। सौम्य! मम सर्वेश्वरत्वप्रतिपादकानि वाक्यानि वेदादिषु सन्ति न वा?

विष्णुस्वाम्याह—सन्ति, परन्तु[२] बहवः शब्दब्रह्मणि निष्णाताः पण्डिताः सगुणं मूर्तं दृश्यं लिङ्गं सूक्ष्मं नेति नेतीति विहाय निरा-

१—श्लोकान्ते "इति श्रीबृहद्वामनपुराणे बृहद्वनरजो माहात्म्यस्तोत्रं सम्पूर्णमिति विशेषः—ध.। २—परंतु—इति नास्ति—क. ग. ख. ङ. च. छ. ज.।

कारं चिन्मात्रमुपदिशन्ति । तैरेव सिद्धान्तैरवलोकनरूपादि तेषां मते पूर्वपक्षं भवति[१] । तदा का युक्तिः शास्त्रीया ?

तन्निवारणाय पुनर[२]भगवानाह—सौम्य ! सत्यं[३], तेऽपि शास्त्रार्थमाश्रित्य वदन्ति । परन्तु मायावादिनो ह्यसुराः[४] । सर्वशास्त्रकृदहमेव, तेषामसुराणां मत्तः पराङ्मुखीकरणार्थं तच्छास्त्रं मदिच्छयैव प्रवर्तते[५] । ते तु जगदनित्यं[६] मन्यन्ते । कथं सत्यस्वरूपान्मत्तो जातमनित्यं[७] भवति ?

"यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्तीति[८] श्रुतेः ।" ( तै० भृगु० १ अ० )

"कारणानुमेयं कार्यं भवतीति" न्यायः । तस्मात्सत्यस्वरूपाज्जातं सत्यमेव । परन्तु मन्मायामोहितमतयोऽसुरप्रकृतयो[९] ह्येतन्मतं पूर्वपक्षयन्ति[१०] । प्रपञ्चनित्यकरणे भगवद्भजन[११] साधनं फलञ्च नित्यं भवति । तस्मिन्नित्ये[१२] ज्ञाते भक्तौ दृढा श्रद्धा भवति । एतदर्थं तत्त्ववादिनो[१३] ब्रह्मवादिनः "सर्वं खल्विदं ब्रह्मेति"

---

१—भविष्यति-क. ख. ग. ज. ञ. ट. । २—तदा—ञ. तदा भगवतोक्तम्—ज. । ३—सौम्य ! ते शास्त्रार्थं-घ. ङ. च. । ४—ह्यासुराः—ख. । ५—प्रावर्तत—क. ख. ग. ज. ञ. । ६—असत्यं—ञ. असत्यं वदन्ति—ट. । ७—असत्यं—ञ. । ८—तद्ब्रह्मेति श्रुतेः—ज. ञ. ट. । ९—असुरप्रकृतयः—इति नास्ति छ. । १०—पूर्वपक्षी कुर्वन्ति—ट. । ११—भजनं फलञ्च नित्यं सत्यं—ञ. । १२—नित्ये सत्ये ज्ञाने भक्तौ च श्रद्धा दृढा —ञ. । १३—एतदर्थं तु—क. छ. ट. । एतदर्थं वादिनः—घ. ज. ।

श्रुतिप्रामाण्यात्प्रपञ्च नित्यं[1] मन्यन्ते । "यथाग्निष्टोमेन स्वर्गकामो यजेतेति" कर्मणा[2] चित्तशुद्धिर्भवति, चित्तशुद्ध्यात्मज्ञानं, ज्ञानेनैवात्मप्राप्ते[3]र्मोक्ष इति[4] स्वर्गकामस्य मोक्षफलं दर्शितं, तद्रोचनार्थं फलश्रुतिरिति तेषां सिद्धान्ते । प्रपञ्चसत्यत्व[5]करणेऽपि तद्वत् । एवं शास्त्रं भवतु । परं प्रपञ्चो नित्य[6]एव । "मायेत्यसुराः" इति श्रुतेः । भगवद्गीतासु च आसुरप्रकृतीनां लक्षणम्—

"असत्यमप्रतिष्ठं ते जगदाहुरनीश्वर"मित्यादि ।

चतुर्भुजा[7]द्याकारैर्मया देवासुरविरोधेषु देवानां पक्षपातः कृतः । अतश्चतुर्भुजाद्याकारेष्वसुराणां द्वेषः, इति निराकारं प्रतिष्ठन्ते । "सोऽहमस्मीति" मन्यमाना हिरण्यकशिपु-कंस-वेन-पौण्ड्रकादयो "मत्तोऽन्यो जगदीश्वरो नास्तीति" वदन्ति स्म । असुराविष्टादेवाश्च[8], ऋषयोऽपि "सोहस्मीति"वादीनि[9] शास्त्राण्याश्रित्य निश्चयं कृतवन्तः ।

अथ ये केवलं दैवीं प्रकृतिं गतास्ते "दासोऽहमस्मीति" मां भजन्ते । यथोक्तं भगवद्गीतासु—

"माहात्मानस्तु मां पार्थ ! दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥"

---

१—नित्यं सत्यं—ज. । २—सत्कर्मणा—ज. ज. । ३—प्राप्तिः ख. ज. । ४—इति तु फलं यद्दर्शितं तद्रोचनार्था फलश्रुतिरिति तेषां सिद्धान्तः—ज. । ५—सत्यकरणे क. ख. ग. ज. ज. ट. । ६—नित्य सत्य एव—ज. । ७—चतुर्भुज इत्यारभ्य अतः पर्यन्तं नास्ति घ. ङ. च. छ. ज. । ८—च—इति नास्ति घ. छ. । ९—वादिनः तथा—ज. । वादीनि-इति नास्ति ज.

यावदविद्याबन्ध[१]स्तावज्जीवत्वम्, अविद्यानिवृत्तौ जीवो ब्रह्मैव भवति । अतो यावद्बन्धस्तावज्जीवेश्वरयोर्भेदः । मोक्षे जीवभावनिवृत्ता[२]वेकमेवेति मायावादिमतम् । अनित्यः प्रपञ्चो नित्यं ब्रह्मेति च । सगुणब्रह्मोपासनया भक्त्यापि मुक्तिरेव पुरुषार्थः । निखिलमपि भक्ति[३]शास्त्रं मुक्तिसाधनं मन्यन्ते ।

नैतन्मतमस्माकम् । ब्रह्मवादिनां जीवत्वे निवृत्ते ब्रह्मानन्द-रूपविभागेनांशांशि-सेव्यसेवकतया भेद एव मुक्तावपि । अत्र[४] "द्वासुपर्णा सयुजा०" इति ऋचः प्रमाणम् ।

इति श्रुत्वा विष्णुस्वाम्याह—भगवन् ! निःसंशयोऽहमस्मि । त्वमेव सर्वेश्वरेश्वरः[५] ।

पुनर्भगवानाह—सौम्य ! यन्मनसीप्सितं तद्ब्रूहि ।

विष्णुस्वाम्याह—श्रुतिषु भक्तिशास्त्रेषु (च) प्रपञ्चस्य मिथ्यात्वं, वस्तुतो जीवेश्वरयोरभेदत्वञ्च[६] दृश्यते, तत्किम् ?

भगवानाह—तत्सत्यम् । मिथ्येतिपद वैराग्यार्थम् । वस्तुतो जीवेश्वरयोरैक्यं शोकमोहभयादिनिवृत्तये पठितम् । "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" इति श्रुतेः (ईशोपनिषद्) ।

अहमानन्दमात्रकरपादमुखोदरो, गुणत्रयातीतोऽक्षरादप्युत्तमः

---

१—बुद्धिः—छ. । सम्बन्धस्तावत्संसारः, तन्निवृत्तौ जीवोऽपि ब्रह्म भवति—ञ. । २—निवृत्ते ऐक्यं-ज. । भावेनिवृत्त एव ब्रह्म-सम्पत्तिः—ञ. । निवृत्ते एकमेवेति मायावादिनां—छ. । ३—ब्रह्म—घ. ङ. च. छ. । ४—अत्र प्रमाणं द्वाविमौ, द्वासुपर्णा० इत्यादि वाक्यम्—घ. ङ. च. छ. ट. । ५—सर्वेश्वरः—क. ग. घ. ङ. च. छ. ञ. । ६—ऐक्यं—छ. ञ. ज. ट. ।

पुरुषोत्तम एव । मद्भक्ता मत्समा मत्सधर्मा[1] मदंशा एव, न तु जीवत्वं तेषु[2] । दृश्यमानभेदोऽप्यभेद एव, सेव्यसेवक-लीलयाऽहमेव सर्वदा वर्ते । अथ मया[3] यत्कार्यं तद्ब्रूहि ।

विष्णुस्वाम्याह—देव ! अनेनैव स्वरूपेण सपरिवारस्त्वमत्रैव तिष्ठ, राजसेवकवत्[4] त्वां परिचरेयम् ।

श्रीभगवानाह—सम्प्रति कलिकालो वर्तते । न देवता साक्षात्त्वां[5], तर्हि कथं मे देवोत्तमस्य ? अतो मत्प्रतिकृतिं[6] कारय । अस्त्यस्मि-न्पुरे विश्वकर्मांशः शिल्पकर्ता । असौ मां दृष्ट्वा मद्रूप[7]समां प्रतिकृति मम करिष्यति ।

विष्णुस्वाम्याह—देव ! एवञ्चेत्तर्हि वैदिकतान्त्रिकलौकिकदेवा-लयप्रतिष्ठासङ्कल्पीकरणादौ कलिकाले देशकालपात्रद्रव्यश्रद्धा-मन्त्रादि[8]विधिः कथं पूर्णो भवति, विध्यूनत्वे[9] कथं विश्वासः ?

पुनर्भगवानाह—दृष्टमात्रा मत्प्रतिकृतिः साक्षादहमेव मन्तव्यः, सेव्यश्च ।

विष्णुस्वाम्याह—एवं कृते मत्कृतमशास्त्रीयं पाषण्डवेदबाह्यं मंस्यते[10] महाजनः[11] ।

---

१—मत्समधर्माः—घ. ङ. च. । २—तेषु दृश्यते—क. ग. । ३—ते ञ. । अथ यत्कार्यं मया—ञ. । ४—राजसेवया—ञ. । ५—सत्त्वं—घ. ङ. च. छ. ञ. ट. । ६—प्रतिमां—घ. ङ. च. छ. ट. । ७—मम रूपसमां मत्प्रतिकृतिं करिष्यति—जातिरिक्तेषु पुस्तकेषु । ८—सम्पदादि—क. ख. ट. । सम्प्रदाय—छ. । ९—विधिन्यूनत्वे—ख । १०—मन्यते महाजनः जातिरिक्तेषु पुस्तकेषु । ११—महाराजः क. ग. घ. छ. ञ. ट. ।

पुनर्भगवानाह—यथा मन्त्रन्यास१प्रतिष्ठादौ कृते, प्रतिमायां देवब्राह्मणवचनैर२र्देवता सान्निध्यं करोति, तथा केवलेन प्रेम्णा देवता सान्निध्यं करोतीति वेदवाक्यानि सन्ति ।

"स होवाच याज्ञवल्क्यस्तस्मादात्महिताय प्रेम्णा हरिं भजेत्, वचसा तन्नामानि कीर्तयन्" इति श्रुतेः ।

"न देवो विद्यते काष्ठे ना मृत्सु न३ शिलासु च
भावे हि विद्यते देवस्तस्माद्भावो हि कारणम् ॥"
"केवलेन हि भावेन गोप्यो गावः खगा मृगाः० ।"

( इत्येकादशस्कन्धे । )

रुष्टेन हिरण्यकशिपुना कोऽ४ऽस्ति त्वस्स्वामीत्युक्ते, प्रह्लादेन सर्वत्रास्तीऽ५त्युक्तम् । पुनर्हिरण्यकशिपुना "कत्स्मात्स्तम्भे न दृश्यत" इत्युक्ते, हरिः स्तम्भा६त्प्रादुरासीत् । तत्र को मन्त्रः, का प्रतिष्ठा, किं सङ्कलीकरणम् ? केवलं भक्त७भाव एव । केवलं प्रेमभावहीनानां८ वेदिकतान्त्रिकोक्तमार्गाधिकारः९ । मदुक्तोऽयं मार्गः श्रीभगवद्गीता१०श्रीभागवतोक्त एव । अतः फलमार्गोऽयम् । "निगमकल्पतरोर्गलितं फलम्"

---

१—गस्यातत्प्रतिष्ठा—ख. । २—वचनेन—ख. छ. ज. ञ. ट. । ३—च न चाश्मनि—ख. छ. ज. ञ. ट. । ४—नास्ति स्वामी—घ. ङ. च. छ. । ५—स्थित: घ. ङ. च. छ. । ६—तस्मात्—छ. । ७—भक्ति—घ. ङ. च. छ. ज. ट. । ८—रहितानां—घ. ङ. च. छ. । ९—मार्गेऽधिकारः—घ. ङ. च. छ. ञ. ट. । १०—श्रीमद्भागवतगीतोक्त एव—ट. । श्रीभगवद्गीतासु श्रीभागवतोक्त एव—ज. ।

इति१ श्रीभागवतमुच्यते । अतोऽयं मार्गो वैदिक एव, ननु पाषण्डो, नाशास्त्रीयश्च ।

इति श्रुत्वा विष्णुस्वामिना सूत्रधारमाकारयित्वा साक्षाद् भगवन्तं दर्शयित्वा प्रतिकृतिः कारिता ।

पुनर्भगवता२ विष्णुस्वामिनं प्रत्युक्तम् । सौम्य ! भगवद्गीता, श्रीभागवतं मे३ शास्त्रं, अहमेव देव एक एव, "कृष्णतवास्मीति" पञ्चाक्षरवाक्येनात्मनिवेदनम्, ४ नामैव मन्त्रः, महाराजोपचार-विधिना सेवैव कर्म । यस्त्वत्सम्प्रदायी भूत्वा यशोदागोप्युद्धवा-दिवत्परिचरिष्यति मां प्रतिमारूपमपि साक्षान्मत्वा, तत्कृतां सेवां पुरावद्६गृहीष्यामि ।

यथोक्तं७ श्रीभागवतदशमस्कन्धे—

"गताध्वनःश्रमौ तत्र मज्जनोन्मर्दनादिभिः ।
नीवीं वसित्वा रुचिरां दिव्यस्रग्गन्धमण्डितौ ॥
जनन्युपहृतं प्राश्य स्वाद्वन्नमुपलालितौ ।
संविश्य वरशय्यायां सुखं सुषुपतुर्व्रजे ॥"

भागवतोक्तोऽयं सेवामार्गः । वैदिकतान्त्रिकविधान८ज्ञानवेदान्त-

---

१—इति-इति नास्ति घ. ब. ञ. ट. । २—भगवान् तंविष्णु० प्रत्युवाच ब. । ३—भागवतमेव शास्त्रं, ञ. । शास्त्रं घ. ङ. च. छ. ब. ट. । ४—श्रीकृष्णः शरणं ममइति विशेषः ञ. । ५—गोपीजनोद्धवादिवत् छ. । यशोदोद्धवादिवत् ञ. । ६—पुनः ब. ङ. च. छ. ट. । ७—दशमस्कन्धे श्रीभागवते-ञ. । यथा दशम-स्कन्धे ब. । ८—विधिना घ. ङ. च. छ. ।

साङ्ख्ययोगवर्णाश्रम[१]धर्मादयो भागवते दृश्यन्ते, ते सर्वे भक्ति[२]साधनान्येव। "मुक्तेर्गरीयसी भक्तिः"। इति गीताभागवतयोः फलं तात्पर्यञ्च। इत्युक्त्वा भगवानन्तर्हितः।

अथ विष्णुस्वामी भगवदुक्त[३]क्रमेणानुदिनं सेवां चकार। तेन कृपया शिष्यसंग्रहोऽपि कृतः। ये[४]तेनानुगृहीतास्ते गोपीजनवल्लभं प्राप्ताः। विष्णुस्वाम्यथ लोकसंङ्ग्रहतो वर्णाश्रमधर्मरक्षार्थं त्रिदण्डी यतिर्भूत्वा भगवद्गतिं गतः।

इति श्रीसम्प्रदायप्रदीपे विष्णुस्वामिस्नेहपात्रे,
बिल्वमङ्गलावर्त्तौ, श्रीवल्लभदीपशिखे,
श्रीविष्णुस्वामि[५]चरितं द्वितीयं
प्रकरणम्

---

१—वर्णाश्रमादयः-छ.। २—भक्तिमार्गं-ज.। ३—भगवदुक्तं—ख. ञ.। ४—येऽनुगृहीताः—घ. ङ. च. छ. ज. ट.। ५—स्वामीश-ञ.

# तृतीयं प्रकरणम्

अथ श्रीविष्णुस्वामिसम्प्रदाये बिल्वमङ्गल[1]नामा बभूव। बिल्वमङ्गलौ[2] द्वावभूताम्, उत्कलदेशीयस्तृतीयश्च, यस्याष्टोत्तरश्लोकसङ्ख्याकं स्तोत्रं श्रूयते। एकः काश्यामेको द्राविडे च। द्राविडदेशीयो विष्णुस्वामिसम्प्रदायी। काशीवासी द्वितीयजन्मनि जयदेवनामा बभूव, येन श्रीगीतगोविन्दगानं कृतम्। स[3] प्रथमं माधवानलः, द्वितीये जन्मनि बिल्हणः, तृतीये बिल्वमङ्गलः, चतुर्थे जयदेवः। नर्त्तकी कामकन्दला, शशिकला, काश्यां वेश्या, पद्मावतीतिक्रमादारभ्य। श्रीगोपीजनवल्लभाख्ये तत्त्वे द्वयोरप्यैकमत्यम्।

बिल्वमङ्गले विष्णुस्वामिमार्गं प्रशासति, शिष्यतया[4] बहवो गोपीजनवल्लभतत्त्वविदो बभूवुः, तदा भगवांस्तत्त्वज्ञानेऽनधिकारिणो जना[5]न्मत्वा[6] पुरातनीं पौराणिकीं कथामनुसस्मार। अत्रान्तरे[7] महादेवः कैलासशिखरे सिद्धवटतरुमूतले रत्नवेदिकायां

---

१—मङ्गलोनाम-इति ब. ङ. च. छ.। ।२—बिल्वमङ्गलौ-इत्यारभ्य ऐकमत्यमित्यन्तं नास्ति ज.। ३—स इति नास्ति ञातिरिक्तेषु। ४—तच्छिष्याः ख.। ५—आसुरजनान् ज.। ६—वीक्ष्य छ.। ७—अनन्तरे ज.। ८—वटतले ख.। तरुमूले ब.।

व्याघ्रचर्मासन उपविश्य श्रीपुरुषोत्तमं समाधिना चिन्तयामास। समाधौ[1] भगवान्महादेवमाह[2]—

यथोक्तं पद्मपुराणे—

"त्वञ्च[3]रुद्र ! महाबाहो ![4] मोहशास्त्राणि कारय।
अतथ्यानि वितथ्यानि दर्शयस्व महाभुज ! ॥ १ ॥
प्रकाशं कुरु चात्मानमप्रकाशञ्च मां कुरु।
त्वामाराध्य यथा शम्भो ! गृह्णीष्यामि वरं सदा ॥ २ ॥
द्वापरादौ युगे भूत्वा कलया मानुषादिषु।
स्वागमैः कल्पितैस्त्वञ्च जनान्मद्विमुखान्कुरु ॥
माञ्च गोपय येन स्यात्सृष्टिरेषोत्तरोत्तरा ॥ ३ ॥"

तदेव पुराऽऽदिष्टमपि मत्वाऽवतितीर्षुर्बभूव।

एतस्मिन्नन्तरे दाक्षिणात्ये जनपदे कश्चिच्छिवभक्तो ब्राह्मणो बभूव, सोऽप्यनपत्यो वृद्धश्च। तस्य शिवमाराधयतः शिवालये शिव आत्मानं दर्शयामास, "वरं ब्रूहि प्रसन्नोऽस्मीत्युवाच।" "पुत्रं मे[5] देहीति" ब्राह्मणस्तमब्रवीत्। पुनः शिवेनोक्तम्—पुत्रादन्यं वरं वरय। पुनस्तेनोक्तम्—पुत्रं मे देहि, तदन्यन्न वृणे। पुनः शिवेनोक्तम्[6], एको द्वादशवर्षायुः, अपरः पञ्चाधिकशतवर्षायुः, तयोर्मध्ये पुत्रमेकं वृणु। द्वादशवर्षायुः सर्वगुणसम्पन्नो भविष्यति, तदितरो महाजडो भविष्यति। ब्राह्मणोऽब्रवीत् देव ! तावत्स्था-

---

१—समाधौ प्रासः ज.। २—प्रत्युवाच घ. ङ. च. छ.। प्रत्याह ख. ज. ञ. ट.। ३—त्वञ्चरुद्र इत्यादि श्लोकद्वयं नास्ति घ. ज. ञ. ट.। ४—महादेव ! घ. ङ.। ५—मे इति नास्ति ङ. च. ट.। ६—यवादि ञ.।

नव्यम्, पत्नीं पृष्ट्वा वक्ष्यामि[१]। शिवेनोक्तम्—हे द्विज ! गच्छ, स्थितोऽस्मि। ततो गृहं गत्वा पत्नीं पृष्ट्वा समायात आह च—देव ! सर्वगुणसम्पन्नं पुत्रं मे देहि। शिवोऽब्रवीत्—अहमेव तव[२] पुत्रो भविष्यामि। ततो गौर्यब्रवीत्—तव सेवार्थमहमवतरिष्यामि।

ततस्तद्ब्राह्मणपत्नी गर्भं दधार। गर्भधारणादनु मासेषु पूर्णेषु[३] पुत्रं जनयामास। शङ्करदानत्वात्पिता तस्य[४]शङ्कर इति नाम चकार। ततः शुक्लपक्ष उडुप इवाशु[५]ववृधे। संस्कारक्रमेणोपनयनमवाप। गुरोः सकृन्निगदमात्रेण वेदान्साङ्गानधीतवान्। शास्त्राणि[६] च स्वयमेव ज्ञातवान्। वाग्जन्म[७]दिनादारभ्य महाकविरभूत्। क्वचिच्छक्तिं स्तौति, क्वचिच्छिवम्, विष्णुमपि क्वचित्। ताव[८]द्देवताः साक्षाद्भूत्वा वरान्ददुः। अणिमादयः सिद्धयस्तद्वशेऽभवन्। कस्यचिद् ब्राह्मणस्य गृहेऽवतीर्णा गौरी तेन विधिव[९]द्विवाहिता। गृहस्थेन तेन त्रैवर्गिको[१०] धर्मः प्रवर्तितः, श्रियैश्वर्य[११]प्रजेप्सुभ्य उपासनाकाण्ड विस्तारितम्, त्रिकालज्ञानवत्त्वात्[१२]। सर्वोऽपि मनुष्यलोकस्तद्वाक्ये स्थितः।

---

१—पृच्छामि ख. घ. ङ. च. छ. भ. ट.। २—मस्य-क. ग. ख. ञ. ट.। ३—पूर्णेषु-इति नास्ति क.। ४—तस्य-इति नास्ति घ. ङ. च. छ. ट.। ५—आशु-इति नास्ति ज.। ६—शास्त्राणीत्यारभ्य ज्ञातवानित्यन्तं नास्ति ञ.। ७—वाग् इति नास्ति क. ख. ग. ज. भ. ट.। ८—ताः—क. ग. ख.। तास्ताः—ञ.। ९—विधिना—ख. भ.। १०—त्रैवर्णिकः—ट.। ११—श्री-इति नास्ति घ. ङ. च. छ.। श्रियै०-इत्यारभ्य तद्वाक्ये स्थितः—इत्यन्तं नास्ति ञ.। १२—ज्ञानत्वात्—घ. ङ. च. छ. ट.।

ततस्तस्य जन्मत एकादशवर्षाण्यतीतानि । प्राप्ते द्वादशे वर्षे पितरं प्राह—हे पितः ! अस्मिन्नेव वर्षे किमप्यनिष्टं भावि, अतः काश्यां यास्यामि१ । ततःपत्न्या सह तेनोक्तम्२, आवामप्या यास्यावः । ततः शङ्कराचार्यः३ सर्वांञ्छिविका४स्वारोप्य पत्न्या सह काश्यां जगाम । यदा काशीमध्ये प्रविष्टस्तदा काल५-ज्वरः समजनि । ततो मणिकर्णिकायां स्नात्वाऽर्द्ध पद्येन स्तुत्वा प्राणानुत्ससर्ज । तदर्द्ध पद्यं यथा६—

"निमज्जता नाथ ! भवार्णवान्तः७—
चिरान्मया पोत इवासि८ लब्धः ।"

तदनु तत्पितरौ महद्दुःखान्वितौ विलेपतुः । तत्परिदेवनं श्रुत्वा गौर्यसम्भ्रान्ता९दयान्विताऽऽसीत् । पद्योत्तरार्द्धं गौर्या पठितम् । तद्यथा—

"मयाऽपि१०लब्ध्वं भगवन्निदानी-
मनुत्तमं पात्रमिदं दयायाः ॥"

तच्छ्रुत्वा११ शङ्करो जीवितमवाप । पत्नीं प्रत्य१२ब्रवीत्, त्वया१३

---

१—गमिष्यामि—ख. । २—पित्रोक्तं—ज. ञ. । ३—शंकरः—ग. छ. । ४—शिविकायां—ज. ञ. । ५—काले—घ. । ६—तद्यथा—ग. घ. ङ. छ. । ७—वेऽन्तः—क. ग. । ८—इवाद्य—च. । ९—गौर्यंश-भूता—ज. । च दया—ङ. । १०—त्वयापि—क. ख. ग. ज. ञ. ट. । ११—पुनः शङ्करः—ञ. । १२—प्रति इति नास्ति च. । १३—कथं मम जीवितुं प्रार्थितः—क. ख. ग. । कथमहं जीवितुम्मतिप्रार्थितः—ञ. ।

मम जीवितं कथं प्रार्थितम् ? जीवितोऽपि प्रव्रजिष्यामि । ततस्तेन संन्यस्तम् ।

कुटीचरबहूदकहंसपरमहंसेति[1] चतुर्धा संन्यासः[2] । मदिरामत्तवत्पतित[3]मपतितं च यत्कटितटाद्वस्त्रं न ज्ञायते यावत्तावच्छिखासूत्रे न त्याज्ये, कषायवस्त्रमपि न धार्यम्[4]—इति श्रुतौ[5] संन्यासधर्माः पठिताः । यावच्छिखासूत्रे तावद्वेदवान् पुरुषः, शिखासूत्रयोस्त्यक्तयोर्वेदोऽपि त्यक्त एव । वेदे त्यक्ते श्रीनारायणस्त्यक्त एव, पश्चात्पाषण्डी[7] भवति ।

पुरा[8]पुरुषोत्तमेन "जनामद्विमुखान्कुरु"—इति शिवं प्रत्युक्तम् । तदेवा[9]वतारप्रयोजनं मत्वा शिखासूत्रे परित्यज्य[10] काषायं वासः परिगृह्यैकदण्डी बभूव । तदनु तच्छिष्यप्रशिष्य[11]त्वेन बहवोऽभवन् । यथोक्तं भगवद्गीतासु—

> यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
> स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥

---

१—हंसारमकेति-ज. । २—सन्यासिनः-च. छ. ज. । ३—कटितटात्तेन वस्त्रं च्युतं-इति नातिरिक्तेषु । कटि तटाद्विनिर्गतं वस्त्रं स्थितञ्च तेन-इति ट. । कटितटात्तेन वस्त्रं विस्रंसितं-इति च. छ. । ४—कार्यं—क. ख. ग. च. छ. ज. ट. । ५—श्रुतौ—इति नास्ति ज. । ६—त्यक्ततया—च. छ. । ७—पाखण्डः—छ. नातिरिक्तेषु । ८—पुराण—छ. ज. । ९—स्वावतार—ज. । १०—त्यक्ते ट. । ११—प्रशिष्यास्तथा बभूवुः—ज. ।

तदनु[१]—"अथातो ब्रह्मजिज्ञासे"इत्यादिव्याससूत्राण्युत्तर-मीमांसाकर्तव्ये[२] व्याख्यातानि ।

श्रुत्यर्थविचारे मायावादतत्त्ववादावनादौ[३]स्तः । "मायेत्यसुराः" इति श्रुत्युक्तत्वान्मायावादमतमासुरमेव, यत्र निरीश्वर-साङ्ख्ययोगवेदान्तज्ञानं प्रतिष्ठितम् । "माहात्मानस्तु मां पार्थे"ति भगवदुक्तं तत्त्ववादिमतम्[४] ।

एतस्मिन्नन्तरे गुर्जरदेशेऽणहिल[५]पत्तननामधेये कश्चिद्राजा बभूव । तस्यात्मजः कुमारपालनामाऽऽसीत् । तं कश्चिज्जैनः श्वेताम्बरो हेमसूरिनामा पाठ[६]यतिस्म । एकदा तेन[७] राजकुमारेण रात्रेश्चतुर्थे यामे सम्पूर्णं चन्द्रमण्डलं गिलित[८]मिति स्वप्ने दृष्टम् । जिन[९]शालायामागत्य प्रबुद्धेन पाठकः पृष्टः-सम्प्रति मयेदृशः स्वप्नो दृष्ट इति[१०] । तच्छ्रुत्वा हेमसूरिणा दुर्वचोभिरसौ रोषं प्रापितः । ततो रुष्टः[११] कुमारः स्वगृहं गतः, पश्चान्निद्रां न लब्धवान् । राजपुत्रेण ततो विचारितम्[१२], "उदिते सवित-

---

१—तदनु-इति नास्ति क. ख. ग. ज. । २—व्यस्त्वेन छ. ञ. ट. । कर्तृत्वे—ञ. ट. । ३—अनादौ—घ. ङ. छ. ४—मते—क. ग. । ५—हिल्ल—घ. ङ. । ६—पाल—ज. जातिरिक्तेषु, पपाठ—छ. । ७—तेन—इति नास्ति च. छ. । ८—गलितमिति—घ. ङ छ. ट । राहुगिलितं—ञ. । ९—जैन—ख. । १०—इति—इति नास्ति छ. जातिरिक्तेषु । ११—क्रुद्धः—घ. ङ. च. छ. । १२—निश्चितं—ख. । चिन्तितं—घ. ङ. । मनसि विचारितं इति विशेषः ज. । मनसीतिनिश्चितं—ञ. । मनसि चिन्तितं—च. छ. ट. ।

र्यनं हनिष्यामि, यन्मां निरपराधं दुर्वचोभिराक्षिप्तवान्" । ततो हेमसूरिणा स्वशिष्यं प्रेषयित्वा सम्मानितः१, पृष्टश्च—भो राजपुत्र ! यत्स्वप्ने त्वया दृष्टं, तेन सप्तमे दिवसे तव राज्यं भविष्यति। यदि स्वप्नदर्शनादनु निद्राऽऽयाति२ तर्हि स्वप्नो निष्फलो भवति, अतो मया रोषितोऽसि । यदि तव३ राज्यं भवे४त्तर्हि मदाज्ञावशगेन त्वया भाव्यम्५ । "भविष्यामीति" राजपुत्रः प्रतिजज्ञे । ततो गुर्जरदेशेशः६ कालधर्ममवाप । कुमारपालो राजा बभूव । ततो हेमसूरिवचनात्स्वदेशमध्ये मीमांसकवैष्णवपाशुपतसाङ्ख्ययोगवेदान्तसंज्ञानि वेदमूलानि षड्दर्शनानि नाशं निनाय ।

एतस्मिन्नन्तरे सूर्यस्यांशो७ देवप्रबोधनामा गौडदेशे८ प्रादुर्बभूव । श्रीकृष्ण९द्वैपायनशिष्यो जैमिनिरिति तस्यांशो भट्टाचार्यो बभूव । ताभ्यां काश्यामागताभ्या१०मिति श्रुतम्—जैनपाषण्डेन गुर्जरदेशे नाशितो वैदिको धर्मः । ततस्तावुभावपि जैन११ वेशं विधाय गुर्जरदेशं समायातौ । हेमसूरिणा

---

१—मानितः—क. ग. ज. । २—समायाति—ज. । ३—ते—ख. ञ. । ४—भविष्यति—इति ञातिरिक्तेषु सर्वेषु । ५—स्यातव्यं—ट. । ६—देशीय राजा—ख. । देशे राजा—ज । देशे तत्पिता—ट. । ७—श्रीसूर्य॰—च. छ. ञ. ट. । ८—गौडे—घ. ङ. च. छ. ज. ट. । ९—कृष्ण—घ. । १०—आगत—क. ग. च. ज. । ११—जैनं वेशं विधाय—इति नास्ति ञ. ।

स्वाश्रमं[1] प्राप्तौ दृष्टौ[2] पृष्टौ च—कौ युवामिति । तावूचतुः—आवां जैनदीक्षाकामुकौ तवान्तिकमायातौ । हेमसूरिराह—युवां वर्षं यावत्प्रतीक्षेथां, परीक्षां कृत्वा शिष्यौ करिष्यामि । ततो वर्षं यावत्ताभ्यां हेमसूरिसेवा कृता, उत्पादितो विश्वासः ।

तत एकदा हेमसूरिणा स्वेष्टदेवता पद्मावतीशक्तिर्नित्यं समाराध्यते, तस्या आराधनकाले तावपि मध्ये नीतौ । यथा कोऽपि न जानाति, तथा मदिरापानं कर्तुमारब्धम्, ताभ्यां मदिरा दत्ता । देवप्रबोधेन भयात्पीता, भट्टेन प्रतीक्षध्व[3]-मित्युक्तम् । तत्पानादनु हेमसूरिणा वेददेवब्राह्मणयज्ञ[4]-निन्दनमारब्धम्[5] । तदा भट्टाचार्यस्य[6] नेत्रयोरश्रुबिन्दवः पेतुः, तद्[7]दृष्ट्वा "ब्राह्मणोऽय" मिति हेमसूरिरुवाच[8]—अहिंसैव जैनशास्त्रे[9] मुख्या, अतो[10]नायं हन्तव्यः, उपरितनभूमौ रक्षणीयः । यत्राऽसौ रक्षितस्तत्र तस्य पुस्तकसग्रह आसीत् । तत्पुस्तकान्या[11]लोकयता भट्टेन ज्ञातम्—जैन मन्त्रै[12]रनेन राजा वशीकृतः ।

राजगृहसमीपे हेमसूरि वसतिरासीत् । तस्य राज्ञः काचि-

---

१—स्वाश्रयं—ग. ट. । २—दृष्टौ —इति नास्ति ज. । ३—शनैः प्रतीक्षध्वं—ज. । ४—यज्ञ—इति नास्ति ज. ट. । ५ —कृतं—ट. । निन्दा समारब्धा—ज. । ६—चार्यनेत्र०—क. ख. ग. ब. भ. । ७—तं—क. ख. ग. च. । ८—सन्नुवाच—ज. । ९—शासने—छ. ज. । धर्मे—ट. । १०—ततो—घ. ङ. छ. । ११—न्यवलोक०—ख. घ. ज. । १२—मन्त्रेण— ब. ट. ।

राज्ञी जैन१धर्मपराङ्मुखी वर्तते स्म । सा नित्यं शालग्रा-मार्चां२ कृत्वा भुङ्क्ते स्म । तया निश्येकदा३ पठितम्—

"किं करोमि क्व गच्छामि को वेदानुद्धरिष्यति"

तच्छ्रुत्वा भट्टाचार्येण चरार्द्धं पठितम्—

"मा विषीद वरारोहे ! भट्टाचार्योऽस्मि४ भूतले"

एवमुक्त्वा तस्मादद्रेः५ पतितः "यदि वेदाः प्रमाणं स्यात्तर्हि पतने मृत्युर्मास्तु"। यदीति सन्देहवचनेन६ एकमक्षि विनिर्गतम् । तदनु यथा कोऽपि न जानाति तथा पत्तनेऽहर्निशं चचार ।

एकदा कस्मिंश्चिदारामे रहसि७ तुलसीवृक्षो दृष्टः, ततस्तत्र स्थितः । ततः८ सायङ्काले पुष्पवणिक्समागतस्तुलसी९पत्रं गृहीत्वा पुनः सुनिहितं कृत्वा जिगमिषुरासीत्, तदा भट्टेन गृहीतः, प्रोक्तश्च१०—भो मालाकार ! यो जैनादन्यं धर्ममाचरति स सकुटुम्बो राज्ञा हन्यते, तत्कथय, कस्यार्थेऽयं तुलसी११ तरुः१२ पुष्पवणिगा१३ऽऽह—जैने दयैव मुख्या, त्वमपि जैनोऽसि, अतो

१—जिन—ञ. । २—ग्रामार्चनं—क. घ. ङ. छ. ञ. । ३—निःस्वस्यैकदा—ञ. । निश्येकपद्यार्धं—घ. ङ. च. छ. । ४—ऽस्ति—घ. ङ. च. छ. । ५—द्युः—घ. ङ. छ. ञ. । ६—वचनेन—घ. ङ. छ. । ७—रहसि—इति नास्ति ट. । रहस्येकतुलसी०—ञ. । ८—ततः—इति नास्ति घ. ङ. च. छ. । ९—सतुलसी०—घ. ङ. छ. ट. । १०—आह च—इति आदर्शेषु । ११—कस्यार्थे तुलसीतरुकुसुमं विचिनोषि—क. ग. । १२—वृक्षः ट. । १३—मालाकार—ञ. ।

राजकुले न निवेदनीयम् । भट्ट आह—सत्यं वद, कोऽपि वैष्णवोऽस्ति ? सशपथं न कथयिष्यामि—इति । पुष्पवणिगाह—अस्ति राज्ञ्येका । भट्ट आह—मदीयं लिखितं[१] पत्रं तव भार्या-हस्तेन तस्यै देयम् । "दास्यामीति" मालाकार आह[२] । ततः "किङ्करोमीति[३]" श्लोकं लिखित्वा प्रेषितवान् । राज्ञ्यपि तद्-[४] दृष्ट्वा तमाकारयामास । ततोऽसौ जैनं वेशं कृत्वा[५] राज्ञीगृहे गतः, अन्यथा गन्तुमशक्यत्वात् । मध्ये गत्वा ब्राह्मणवेशं कृत्वाऽऽ-त्मानं दर्शयामास । ततो राज्ञी तं धर्मतः पूजयामास । ततो भट्ट-स्तद्गृहेऽलक्षितोऽवात्सीत् । पश्चाद्यादशोऽङ्गदो हेमसूरिणा जैन-वशीकरणमन्त्रैः कृत्वा राज्ञो बाहौ बद्धः, तादृशा[६]मङ्गदं कारयित्वा राज्ञीहस्तेन राज्ञो बाहौ बद्धः, जैनकृतो गृहीतः । ततो वंदिका-भिचारतो राज्ञः कालज्वरः समजनि । तद्धेतुं हेमसूरिः पृष्टः, "कथं विज्वरो भविष्यामीति" । हेमसूरिराह—दत्ते कालपुरुषदाने विज्वरो भविष्यसीति । ततः कालपुरुषं निर्माय कमपि ब्राह्मणवटुं[७] ज्ञात्वा, यज्ञोपवीतादि धारयित्वा, गायत्रीमन्त्रं कथयित्वा[८], तस्मै काल-पुरुषदानं दापितम् । दत्ते दाने राजा विज्वरो बभूव । ततो राज्ञो मनसि विचारः समजनि, न ब्राह्मणसमं किञ्चिदस्ति, येभ्यो दाने दत्ते विज्वरोऽहमासम् ।

---

१—तुलसी—छ. । २—उवाच—ञ. । ३—किं करोमि क गच्छा-मीति पूर्वं—इति ञ । ४—तं—इति जातिरिक्तेषु ५—विधाय—ट. । ६—तादृशाङ्गदं ज. ञ. । ७—वटुकं—च. छ. ञ. ट. । ८—पुस्तकद्वारा कथ०—घ. ङ. च. छ. ।

ततः पुनर्देवप्रबोधाचार्यः कृतप्रायश्चित्तः, श्रीनृसिंहं प्रसाद्य पत्तनपुरं समायातो बहुभिः शिष्यैः सार्द्ध१ शिबिकारूढः। तैः सरस्वतीतीरे२ पाकक्रिया कर्तुमारब्धा। तदा हेमसूरिशिष्यैः समागत्य यथाऽन्न३मपक्वं भवति, तथा मन्त्रविद्यया कृतम्। राज्ञीगुरुर्भट्टाचार्योऽपि देवप्रबोधाचार्यं प्रति४समायातः, कुशलादि पृष्टम्। ततो भट्टाचार्येण नारिकेलफलान्यभिमन्त्र्य क्षेपणैः प्रहितानीव प्रेरितानि५ जैनानां शिरस्सु६ युगपत्पेतुः। तैर्हन्यमानैः समेत्य तेषां पाके स्वमन्त्राभिचारो७ दूरीकृतः।

ततो द्वितीये दिवसे कृताह्निकाः सर्वे ब्राह्मणा राजसभां८ जग्मुः। तानागतान्विलोक्य९ राज्ञा प्रणामादिसत्कृतिः कृता। तद् दृष्ट्वा हेमसूरिश्चकितो१० बभूव। ज्योतिर्विदा ब्राह्मणेन तिथ्यादि११ पञ्चाङ्गं श्रावितम्। तत्र१२ स्मार्तेन कथितं "मद्य श्राद्धं१३ करणीयममावास्यास्ती"ति१४। तच्छ्रुत्वा हेमसूरिराह—नाद्यामा-

१—सार्द्धमिति नास्ति ख. प्रातिलिपिषु। २—तीरे स्थित्वा—ख. म.। ३—यथान्नमपक्वं भवेत्—म.। ४—चार्यं समा०—क. ग. घ. ङ.। प्रत्यायातः—च. छ. ज.। ५—प्रक्षिप्तानि—ट.। ६—शिरांसि—क. ख. ग. घ. ङ. च.। ७—मन्त्रचारः—ख. ज. प्रातिलिपिषु। ८—सभायां—क. ग.। ९—वीक्ष्य—च. छ.। १०—चुकोप—घ. ङ. च. छ.। दुःखितो—म.। ११—पञ्चाङ्गं तिथ्यादि—क. ख. ग. ज. म. ट.। १२—तत्र—इति नास्ति ख. घ. ङ. छ. म. ट.। १३—अद्यामावास्याश्राद्धं करणीयं—घ. ङ. च. छ. ट.। १४—अमावास्यास्तीति—इति नास्ति ख. म.।

वास्या, पौर्णमासी१ वर्तते। ब्राह्मणैः कथितम्—नाद्य पौर्णमास्य-
मावास्यैव। हेमसूरिराह—यद्यद्य पौर्णमासी न भवेरत्तर्हि शत-
हस्त३निम्ने गर्ते सशिष्यपुस्तकोऽहं प्रविशामि४, अन्यथा त्वम्५।
तथेत्योमिति ब्राह्मणैरङ्गीकृतम्। ततो हेमसूरिणा स्वेष्टदेवतां
पद्मावतीं स्मृत्वा तस्याः कुण्डलं प्रार्थयित्वा निशामुखे गगने
चन्द्रबिम्बवद्रचितम्। तद् दृष्ट्वा सर्वे जनाः पौर्णमासीं मेनिरे।
ततो देवप्रबोधाचार्येण स्वेष्टदेवता६—नृसिंहवचनेन तच्छक्ति-
कर्ण७कुण्डलं विज्ञाय राज्ञे निवेदितम्—देव८! द्वादशयोजनावधि
प्रकाशोऽस्य नाधिकः९। तद्राज्ञा विलोकिते तत्तथैव जातम्१०।
ततो हेमसूरिणा विचार्य गर्ते प्रवेष्टुमारब्धम्। ततो गर्त-
तलस्थे११ हेमसूरौ सर्वैर्जनैः समेत्य१२धर्मस्य तत्त्वं पृष्टम्। तेन
वक्ष्यमाणमुक्तम्—

"हरिर्भागीरथी विप्राः, विप्रा भागीरथी हरिः।
भागीरथी हरिर्विप्राः सारमेत१३ज्जगत्त्रये॥"

इत्युक्ते मृद्भि१४र्गर्तः पूरितः।

---

१—पौर्णमास्यद्य—ख. ज.। २—स्यात्—घ. ङ. च. छ.। ३—हस्तदघ्ने निम्ने—ज.। ४—प्रविशेयं—ज.। ५—अन्यथा त्वं—नास्ति क. ख. ग. ज. झ.। ६—दैवत—ज.। ७—कर्ण इति नास्ति च. छ.। ८—देव—इति नास्ति क. ख. ग. ज.। ९—नाप्यधिकः—ट.। १०—ज्ञातं—छ.। ११—जलस्थे—घ. ङ. च. छ.। १२—समागत्य ट.। १३—एकं ज०—क. ख. ग. ज.। १४—मृदा-च. छ.।

ततो ये पूर्वं नानादेशेषु गता ब्राह्मणादयस्ते१ पुनः समागताः । ततो वर्णाश्रमलक्षणो धर्मः समावर्ततर२ । गुर्जरदेशे वेदाः प्रवृत्ताः । पूर्वं३मात्रं वैष्णवशैवदर्शने न प्रवृत्ते, भट्टाचार्यस्य मीमांसकत्वात् । मायावादिवेदान्तस्यापि प्रवृत्तिरभवत्४ ।

यदा भट्टाचार्यैर्ज्ञातं५ कुण्डलमिदं पद्मावत्याश्चन्द्रबिम्बायितं तदा पद्मावती सरस्वत्येव सा शशा भूमाववततार६ । इति सा भट्टाचार्यस्य सुताऽभूत् । ब्रह्मणोंऽशः सुरेश्वरनामा कश्चिद्भट्टस्यान्तेवास्यासीत्, सा तस्मै पत्नीत्वे७ दत्ता । तया सार्द्धमसौ भट्टमतानुसारेण गृहाश्रमोचितकर्माण्यन्वहं चकार । कारणं तद्भक्तिरभूत् । ततो भट्टैः स्वमनसि विचारितम्,८—मया गुर्जरदेशे वेदमार्गसंस्थापनाय जैनशास्त्राण्यवलोकितानि, "पाषण्डशास्त्रावलोकनेऽग्निप्रवेशः" इति कारणः१० ।

ततः प्रयागे समेत्याग्नौ प्रवेष्टुमारब्धवन् । तदा तत्र शङ्कराचार्यः समागतः, "विवदिषुरहमस्मो"त्युवाच । तदा भट्टैरुक्तम्—

---

१—ब्राह्मणास्ते सर्वे पुनः—क, ख, ग, घ, ङ, । ब्राह्मणादयस्ते सर्वे—ख, । २—समावर्तत—घ, ङ, छ, ज, झ, ट, । ३—परन्तु पूर्व०—घ, ङ, छ, । ४—अभूत्—ख, घ, ङ, छ, ट, । ५—चार्येण—क, ग, । ६—अवततार्ति—ख, । ७—पत्नीत्वेन-घ, ङ, छ, । ८—यथा कर्माणि-इति विशेषः ग, । ९—मार्ग-इति नास्ति ज, । १०—कारणःआह ख, ।

त्वया काश्यां गन्तव्यम्, तत्र मम जामाताऽस्ति, स[1] विवादं करिष्यतीति, अहमग्नौ प्रवेक्ष्यामि[2]।

ततः शङ्करः काश्यां गतः सुरेश्वरभट्टैः सार्धं विवादं चकार। तत्पत्न्येव[3] मध्यस्था कृता। "शङ्करः पराजयं[4] प्राप्तः पुनर्गृहस्थो भवति, सुरेश्वरः पराजितो यतिरेकदण्डी भवतीति" पणः कृतः। सप्तमे दिवसे शङ्करेण सुरेश्वरो जितः। भट्टसुतया सरस्वत्या शङ्करस्य पक्षपातः कृतः, भट्टमतखण्डने शापदानवैरत्वात्।[5]

ततः शङ्करो गोकर्णाख्यं शिवक्षेत्रं दक्षिणस्यां[6] जगाम। तत्र गत्वा शिष्यचतुष्टयं प्रत्युवाच—चतसृषु दिक्षु सुखासनारूढै-र्भवद्भिर्गत्वा सर्वत्र मायावादिसिद्धान्तः[7] स्थापनीयः। "संन्यासः[8] शिखासूत्रपरित्यागेनैकदण्ड[9] एव" इति रात्रौ शिष्यानामाज्ञा दत्ता। तैराज्ञा शिरसि धृता। प्रातः प्रयाणं भावि।

तेषां मध्ये एको मधु[10]नामाऽभवत्। सोऽपि शङ्कराद्गृहीत-

---

१—स—इति-नास्ति नातिरिक्तेषु। २—प्रविशामि-अ.। ३—सभामध्यस्था तत्पत्न्येव कृता-अ.। ४—चेत्पराजयं प्राप्नुयात्पुन-र्गृहस्थो भवेत्, सुरेश्वरश्चेत्०००भवेत०इति अ.। ५—ततो विवादे जाते शङ्करेण पराजितः सुरेश्वर एकदण्डी बभूव—इति-अधिकं-घ. ङ. छ.। ६—दिशि-विशेषः घ. ङ. छ. ट। ७—मतं स्थापनीयं-घ. ङ. च. छ.। वादसिद्धान्तः—अ. ट.। ८—तत्र गत्वा हे शिष्याः! संन्यासः प्रस्थापनीयः—इति विशेषः अ.। ९—एकदण्डयेव—क. ख. ग. ट.। परित्याग एकदण्ड—अ.। १०—मध्वनामा, तस्मा आज्ञा दत्ता, तेनाज्ञा शिरसि धृताऽभवत्—इति विशेषः अ.।

संन्यासः, तस्य स्वप्ने[1] निशि श्रीरामचन्द्रः प्रादुर्बभूव, वाक्यं[2]माह च—मध्व[3] ! त्वया शङ्कर[4]वचने न स्थातव्यम्, यतो भवान्हनुमदंशः, त्वं वैष्णवसम्प्रदाय[5]-प्रवृत्तयेऽवतीर्णः, शङ्करकृतद्[6]व्याससूत्रभाष्य[7]मुत्तरमीमांसालक्षणं पूर्वपक्षीकृत्य तत्त्ववादिसिद्धान्तानुसारेण पुनर्व्याससूत्राणि[8] व्याकुरु। तत्त्ववादिसिद्धान्तः स्वयमुपदिष्टः। ततोऽसौ शङ्करदर्शित[9]मार्गं विहाय श्रीरामचन्द्र[10]दर्शितमार्गेण वैष्णवसम्प्रदायं प्रवर्तयामास। शङ्करमते तत्सम्प्रदायिनामद्यापि[11] विरोधः।

इति[12] समासतो मध्वाचार्यसम्प्रदायोत्पत्तिः।

बिल्वमङ्गलतः[13] पश्चान्मध्वाचार्यात्पूर्वं द्राविडे कश्चिद्रामानुज इति[14] ब्राह्मणो बभूव। तस्य लक्ष्मीं समाराधयतो लक्ष्मीः प्रसन्नाऽभवत्। वत्स ! वरं ब्रूहीत्युवाच। तेनोक्तम्—देवि ! भगवद्धर्मं वद। तत[15]स्तया गरुड आज्ञप्तः। ततो गरुडेन तस्मै नारायणीयः

---

१—स्वप्ने-इति नास्ति ख. ङ. छ. ट.। स्वप्ने श्रीराम० ब.। २—वाक्यं-इति नास्ति ख.। ३—साधो ! ज.। ४—न शङ्करवचनेन—च. छ.। शङ्करवचसि—ट.। ५—सम्प्रदायेऽवतीर्णः—ख. ङ. च. छ. ट.। ६—कृतं—ख. ङ. छ. ट.। ७—भाष्योत्तर० क. ग. च.। ८—सूत्राणां भाष्यं कर्तव्यं—ट.। ९—दृष्टं—ख. ङ. च. छ.। १०—चन्द्र-इति नास्ति च. छ. ट.। ११—अतएवाद्यापि—ख. ङ. च. छ.। १२—ततो मध्वा० छ.। १३—अस्ति दक्षिणापथे-बिल्व०-इति विशेषः ख. ङ. छ.। १४—नामाद्विजः—ख.। १५—अतः—ख.।

सिद्धान्तः समर्पितः। तस्मात्सम्प्रदायः प्रावर्तत। श्रीवैष्णवा१ अद्यापि दक्षिणस्यां दिशि प्रसिद्धाः। तस्मिन्नेव सम्प्रदाये केचिद्धरिहरोपासका अगस्ति२परशुरामकृताः श्रीवैष्णवाः श्रूयन्ते।

इति रामानुज३सम्प्रदायोत्पत्तिः४।

अस्ति दक्षिणापथे पाण्डुरङ्गपुरं५नाम नगरम्। तत्र श्रीविट्ठलाख्यं६ भगवत्स्वरूपम्। तस्मिन्पुरे कश्चिन्निम्बादित्यनामा ब्राह्मणो बभूव। तस्मै श्रीविट्ठलेन स्वसिद्धान्त उपदिष्टः। ततः सोऽपि तत्सिद्धान्तानुसारेण स्वसम्प्रदायं प्रवर्तयामास७।

इति८ समासतो निम्बादियत्सम्प्रदायोत्पत्तिः।

एवं "श्रीविष्णुस्वामि-रामानुज-मध्वाचार्य-निम्बादित्या" इति चत्वारः सम्प्रदायप्रवर्तका दाक्षिणात्याः। उपनिषद्गीताभागवत९-व्याससूत्रभाष्य चतुर्भिः स्व१०सिद्धान्ताविरोधेन कृतमस्ति, निबन्धश्च पृथक् पृथक्। चतुर्षु सम्प्रदायेषु स्वस्वाचार्यकृतो निबन्धो वर्तते। यद्वाक्यतो नित्यनैमित्तिकभक्तिकार्येषु स्वस्व११-सम्प्रदायाः प्रवर्तन्ते१२।

---

१—स्वे-इति विशेषः ख. घ. ङ. छ. ज. ट.। २—अगस्त्य—घ. छ. ३—श्रीरामा०-इति घ. ङ. छ.। रामानुजोत्पत्तिः—ट.। ४—समासतः कथिता-इति विशेषः ज.। ५—पाण्डुरपुरं—ज. ञ.। पाण्डुरनाम—ट.। ६—श्रीविट्ठलो—ज.। ७—वर्तयामास—क. ग.। ८—इति समासत इत्यारभ्य सम्प्रदायोत्पत्तिरित्यन्तं नास्ति जातिरिक्तेषु। ९—श्रीभाग० घ. ङ. छ. ज.। १०—स्व-स्व—ख. ज. ट.। ११—स्वे स्वे सम्प्रदाये वर्तेत ज.। १२ वर्तन्ते—ज.।

यथोक्तं पद्मपुराणे—

"चत्वारस्ते कलौ भाव्याः सम्प्रदायप्रवर्तकाः।

भविष्यन्ति प्रसिद्धास्ते ह्युत्कलेऽपुरुषोत्तमात् ॥"

तद्यथा—एकदा मध्वाचार्यः श्रीपुरुषोत्तमायतनं जगाम। तत्र२ये भगवत्सेवका ब्राह्मणास्तान्प्रत्युवाच—यूयमदीक्षिताः, अदीक्षितै-र्भगवत्सेवा न कार्या३—इति। तदा तैरुक्तम्४—श्रीजगन्नाथ-स्याज्ञया दीक्षां गृहीष्यामः। तदा श्रीजगन्नाथेन सरोषं मध्वाचार्यं प्रत्युक्तम्—५मदीयांस्त्वं दीक्षितान्करोषि ! एते दीक्षिता एव। मध्वाचार्यो भगवन्तं प्रत्याह—

"अदीक्षितस्य वामोरु ! कृतं सर्वं निरर्थकम्।

पशुयोनिमवाप्नोति दीक्षाहीनो मृतो नरः॥"

इति शास्त्रे कथमुक्तम् ! भगवानाह—एतत्क्षेत्रादन्यत्र६ दीक्षिता एव वैष्णवाः। अत्र मदिच्छैव प्रधाना। मध्वाचार्य आह७—के वैष्णवाः केऽवैष्णवा८ इति मया कथं ज्ञायते ! भगवा-नाह९—ये सम्प्रदायचतुष्टयान्तःपातिनस्ते वैष्णवाः। मध्वा-

---

१—स्वकुजे-ख. क. छ.। २—तत्र-इति नास्ति घ. ङ. प्रतिषिद्धेषु। ३—कर्तव्या—ट.। ४—तैरित्युक्त-इति छ. ख. टप्रतिष्ठितेषु। ५—रे रे मधो ! त्वं-इति विशेषः ख.। ६—अन्यत्रादीक्षिता-घ. क्षेत्रान्यदीक्षिता-क. ग.। एकतन्त्रादन्यत्र-ज.। ७—मधुरुवाच-ज.। ८—केऽवैष्णवा इति नास्ति क. ख.। ९—श्रीभगवानुवाच-ज.।

चार्य आह[1]—के ते सम्प्रदायाः ? पुनर्[2]भगवानाह—विष्णु[3]स्वामी, रामानुजः, मध्वाचार्यः, निम्बादित्यः । एतेषां[4] सम्प्रदाये ये प्रवर्तन्ते[5] ते वैष्णवाः ।

इति श्रीजगन्नाथवाक्यात्कलौ सम्प्रदायाश्चत्वारः प्रसिद्धाः । चत्वार उपसम्प्रदाया"श्चैतन्यस्वरूपप्रकाशनन्दा"[6] इति । विष्णुस्वामिन उपसम्प्रदायश्चैतन्यः । रामानुजस्य नन्दः[7] । मध्वाचार्यस्य प्रकाशः । निम्बादित्यस्य स्वरूपः । इति प्राच्याः । स्वरूपप्रकाशौ व्युच्छिन्नौ कालेन । एषु च बलिष्ठाचार्याभावाच्छास्त्रव्याख्याननिबन्धादि न वर्तते । एते मूलसम्प्रदायान्तःपातिन एव, परन्तु[8] पूर्वाचार्यतो वैलक्ष्येन स्वरुचिप्रवृत्तत्वा[9]दुपसम्प्रदाया इत्युच्यन्ते । गरीयसी केवलमीश्वरेच्छा । अत्र सम्प्रदायादिषु को विचारः ।

---

१—मधुरुवाच-ज. । २—पुनः-इति नास्ति छ. । ३—एको विष्णु०. द्वितीयो रामा०. तृतीयो मध्वा०. तुरीयो निम्बा० इति विशेषः घ. ङ. च. छ. ट. । ४—एतत्-घ. ङ. च. छ. ट. । ५—प्रवर्तन्ते-इति नास्ति व्यतिरिक्तेषु । ६—एकश्चैतन्यः, द्वितीयः स्वरूपः, तृतीयः प्रकाशः, चतुर्थोनन्द-इति घ. ङ. च. छ. ट. । ७—नन्दः उपसम्प्रदायः इति विशेषः घ. ङ. च. छ. ट. । शेषद्वयेऽपि-उपसम्प्रदायः, इति-विशेषः । ८—परं पूर्वाचार्यसिद्धान्ततो वैलक्षण्येन प्रवृत्ताः स्वरुचिप्रवृत्तत्वात्, इत्युपसम्प्रदायादिषु को विचारः-इति विशिष्टः पाठः ज. । ९—स्वरुचिप्रवर्तनायोपसम्प्रदायाः-इति व्यतिरिक्तेषु । वर्तनात्-ख. ।

इति श्रीसम्प्रदायप्रदीपे[1], विष्णुस्वामिस्नेहपात्रे,
बिल्वमङ्गलावर्त्तौ, श्रीवल्लभदीप[2]शिखे,
सर्वसम्प्रदायोत्पत्तिनिरूपणं
तृतीयं प्रकरणम्

---

१—सम्प्रदायप्रदीपे श्रीवल्लभप्रदीपे सम्प्रदायोत्पत्तिनिरूपणं नाम तृतीयं प्रकरणम्-इति क. ट. । २—वल्लभप्रदीपशिखे—ज. । वल्लभ-शिखे—ग. ङ. ।

# चतुर्थं प्रकरणम्

श्रीवल्लभो यदि मदीयहृदीश्वरोऽस्ति
श्रीगोपिकाहृदय - पल्वल - राजहंसः ।
सत्येन तेन मम वाचि तदीयवृत्तं ।
सर्वं प्रकाशमुपयातु यथार्थतोऽत्र ॥ १ ॥

अस्ति दक्षिणापथे तैलङ्गाभिधो[1]जनपदः । यत्र ब्राह्मणाः कलिं पराभूय वैदिकधर्ममनुतिष्ठन्ति । यत्राग्निहोत्रयज्ञ[2]कुण्डेषु हविषि हूयमाने धूमान्धकाराच्छादितदृष्टिः कलिर्दूरतः[3] पलायते[4] । यत्राद्यापि वेदाः सवीर्या वर्तन्ते । तत्र[5] ब्राह्मणसकलगुणालङ्कृत[6]—श्रीमल्लक्ष्मणभट्ट — कुलकमलविकासमार्तण्डाः[7] श्रीवल्लभाचार्य्याः प्रादुर्बभूवुः ।

अहो कलिर्दूरतरं गतोऽधुना
धर्मोऽपि संवृद्धिमितश्च[8] वैदिकः ।

---

१—तिलिङ्गा०-इति चातिरिक्तेषु । तिलिङ्गाभिधानः—ब. । २—यज्ञ-इति नास्ति क. ग. च. । ३—०तरं—घ. ङ. छ. ट. । ४—पलायति—ज. ञ. । ५—यत्र सकलब्राह्मणगुणगणालं० इति ब. ञ. म. । तत्र सकलब्राह्मणगुण-इति क. ख. ग. । ६—श्रीयज्ञनारायणवंशोद्भवश्रीमल्लक्ष्मण० इति विशेषः क. ख. ।०कृतश्रीलक्ष्मण-इति छ. ज. झ. ञ. ट. । ७—(एकवचनान्तः पाठः) छ. ज. झ. ञ. ट. । ८—वृद्धिं समितः—छ. झ. ञ. ट. ।

भक्तिर्हरौ[1] सम्यगवर्ततैव

चाकाशबाणद्वाह यदीय[2] जन्मनि ॥ २ ॥

एकदा तैलङ्ग[3] देशाच्छ्रीलक्ष्मणदीक्षितः[4] काश्यां समागतः। तत्रा[5]श्रमक्रमेण गृहाश्रममवाप्य यथोक्तं गार्हस्थ्यं पालयामास। एतस्मिन्नन्तरे तद्धर्मपत्नी[6] कृताधानादि[7]—संस्कारा गर्भं दधार। तद्दिनादारभ्य सप्तमे[8] मासे प्राप्ते काश्यां परचक्रमाजगाम। तद्भयात्सकलमपि पुरं[9] पलायितम्। ततः[10] परचक्र-भयेन काशीतः श्रीलक्ष्मणदीक्षितैः प्रयागं प्रति प्रचलितम्। तत्र स्नात्वा पश्चाद्दक्षिणं प्रति प्रस्थानमारेभे। तदा तत्पत्न्याः गलायन्त्याः[11]

---

१—हरेः—क. ख. ग. हरेः सम्यगिह प्रवर्तते - इति ब. । हरेः सम्यगवर्ततेह यतोऽयमीशः पुत्रतामभूतद्वे । इति तद्देशाकाश वाग्वाह-यदीयजन्मनि इत्यधिकं च. । २—यदस्य—क. ख. ग. । ३—तिलिङ्ग—क. ख. ग. घ. । तिलङ्ग छ. च. झ. ब. ञ. ब. । ४—भट्टैः काश्यां समागतं—ञ. । दीक्षितैः॰ समागतं-इति क. व्यतिरिक्तेषु । भट्टदीक्षितैः स्वज्ञातिभिः सह॰ समागतं इति घ. छ. झ. । ५—ततः आश्रम—ख. ब. व्यतिरिक्तेषु । ६—तत्-इति नास्ति क. ख. ब. व्यतिरिक्तेषु । तद्धर्मपत्नीलक्ष्मागारः कृता॰ इति ब. ७—कृताधानादिसंस्कारा-इति नास्ति घ. छ. । ८—सप्तम मासि-ञ. । सप्तमे मासि—अ. ज. ट । ९—सकलोऽपि जनवर्गः—पलायितः—ञ. । १०—ततः-इत्यारभ्य-आरेभे-इत्यन्तं नास्ति घ. छ. व्यतिरिक्तेषु । ११—सम्वत् १९३५ वर्षे माधवेऽतिपुण्यप्रदे मासेऽसिते पक्षे शुभे गुरुवासरे, शुभपुनर्वसुनक्षत्रे पथि-इत्यधिकं ब. ।

पथि१ वने सप्तममासीयो गर्भो विस्रंसितः। ततो महा२तरुतले तरुपत्राण्यास्तीर्य तत्राम३गर्भं मुक्त्वा कुत्राप्यभयदेशं४ गताः। तत५श्चोडा नगर्यां समागताः। आनन्दाविर्भावात्सर्वेषां हृदि प्रसन्नता जाता। तत्र स्थित्वा श्रुतम्, काश्याः सकाशात्परचक्रं निवृत्तम्, सम्य६क्स्वास्थ्यं जातम्। तदा लक्ष्मणदीक्षित७पत्नी काशीं प्रत्यायान्ती यत्रामगर्भो मुक्तस्तत्राऽऽयाता, स्वसार्थान्८प्रत्युवाच—क्षणं९ सर्वेऽत्र तिष्ठन्तु१०, पश्यामि मयात्र११ गर्भो मुक्तस्तस्य कीदृशो वृत्तान्तः। इत्युक्त्वा भर्त्रा सार्द्धं दिदृक्षुः१२ प्रस्थिता। या१३वत्तरुतले तौ दम्पती गतौ तावन्महाज्वालाविराजितं तत्राग्निपुञ्जं ददृशतुः, आहतुश्च—अहो महच्चित्रमिदम्, क्षण१४—नाश्य आमगर्भो मुक्तस्तत्रा१५ग्निः प्रज्वलन्निव दृश्यते! अतोऽ

---

१—मार्गे चक्रकारण्यवने-इति घ. ङ. छ.। महावने-ख. ञ. झ. ज. ट.। २—महा-इति नास्ति झ.। ३—आमंगर्भमत्यजी इक्षितवान् बालं-ज.। ४—प्रदेशं—छ. झ. ट.। ५—ततः इत्यारभ्य श्रुतं इत्यन्तं नास्ति क. ख. ग. ञ. झ. ज. ट.। ६—सम्यक्-इति नास्ति घ. ङ. छ. ट.। ७—भट्ट ट.। ८—स्वगानेव-ज.। स्थाने-ख. घ. ङ. छ. ट.। स्वसा००वाच-इत्येतत्स्थाने भर्तुः पुरतः सर्वं कथितं इति झ.। ९—क्षणं इति नास्ति ञ. ज.। १०—तिष्ठत-क. ख. ग.। ११—मया-इति नास्ति घ. ङ. छ। यत्राम-झ.। १२—द्रष्टुं-ख. ज.। सह द्रष्टुं-ज.। १३—यावत् इत्यारभ्य तावत्-इत्येतत्स्थाने-तत्र गत्वा-इति घ. ङ. छ.। १४—अत्र मया-क. ख. ग.। क्षणेन यत्राम-झ.। १५—ततोऽग्निः-घ. ङ. छ. ट.।

मानुषोऽयं गर्भो जीवन्निव[1] तिष्ठति। अथैनं गृहीत्वा[2] यास्यावः, इत्युक्त्वा[3] गर्भं नीत्वा गृहं प्रस्थितौ[4]। गृहं समागत्य महद्दैवा[5]ऽनुपृष्ट्वा गर्भं पालयामासतुः। तदनु साङ्गो गर्भो ववृधे।

ततः स्वकुलदेश[6]रीत्या जातकर्मादि[7]संस्कारांश्चक्रतुः। तदनन्तरं शिशोः सर्ववल्लभत्वाच्च[8] पिता श्रीवल्लभ इति नाम चकार। एवं क्रमेण पञ्चमे[9] वर्षे जाते कृतोपनयनो[10] वेदमधीतवान्। तदा तस्या[11]ऽमानुषीं प्रज्ञां दृष्ट्वा[12] लक्ष्मणभट्टैः स्वहृदि विचारितम्[13]—अहो![14] सम्प्रति कलिकालः पुत्रोऽयं मे महानुभावः, "कोऽय[15]मवतीर्ण" इत्यहं[16] न वेद्मि? इति सञ्चिन्त्याग्नि-

---

१—निव घ. ङ. छ. झ. ट.। २—नीत्वा गृहं ख. घ. ङ. छ. झ. ट.। ३—इत्युक्त्वा गर्भं नीत्वा-इत्येतत्स्थाने-जातकर्मादिसंस्कारांश्च करिष्यावः, इति, घ. ङ. छ.। ४—प्रति प्र०-ख. ज. झ.। ५—महदित्यारभ्य-ववृधे-इत्यन्तं नास्ति घ. ङ. छ.। ६—देश-इति नास्ति क. ग.। ७—जात-इत्यारभ्य शिशोः-इत्यन्तं नास्ति क. ख. ग. ज. झ. ञ.। ८—च-इति नास्ति, पिता वल्लभ ख. घ. ङ. ज. झ. ञ. ट.। ९—पञ्चम इत्यारभ्य अधीतवान् इत्येतत्स्थाने गर्भाष्टमे वर्षे जाते कृतोपनयना वेदमधीतवन्तः क. ग.। १०—तत उपनयने घ. ङ. च.। ११—तेदां क. ग.। तदा स्य ज. झ.। १२—ज्ञात्वा श्री क. ग.। १३—चिन्तितं—ट.। १४—अहो-इत्यारभ्य-कालः-इत्यन्तं नास्ति झ.। १५—कोऽयं भव० क. ग. ख. कोऽयमवतीर्णस्त्वं न— झ.। १६—इदं क. ग.।

होत्रशालायां१ भूमौ शयनं चकार । तदा रात्रेः२ पाश्चात्ये यामे श्रीमदानन्दमात्रकरपादमुखो३दरादिर्भगवाँ४ञ्छ्रीपुरुषोत्तम एवाग्निर्विप्ररूपः स्वप्ने५ प्रादुर्बभूव, आह च—अहमग्नि-र्भगवान्६, इच्छया तव पुत्रतां गतः । मदनुभावे७ निः-सन्देहो८ भव, इत्युक्त्वाऽग्नि९रन्तर्हितः । तत्स्वप्नवृत्तान्तः श्री१०लक्ष्मणभट्टैः स्वपत्नीं प्रत्यवादि११ ।

तदनु कियति१२ काले गते सति श्रीलक्ष्मणदीक्षिताः कालधर्ममवापुः । ततस्तत्पुत्र१३स्तत्पारलौकिकं कृत्वा१४ कालक्रमेण मासचतुष्टयमध्ये१५ साङ्गान्वेदानधीत्य सर्व-शास्त्राण्य१६धीतवान् । श्रीशेषकृत१७पाणिनीयव्याख्यां समाप्य

---

१—शालाभूमौ क. ग. । २—रात्रेः-इति नास्ति झ. । तत्रिशायाः ञ. । ३—तलो क. ख. ग. ञ ४—भगवत्स्वरूपमुखमेवाग्निः छ. ङ. छ । भगवच्छ्रीपुरुषोत्तममुखमेवाग्निः ज. झ ञ. ट. । ५—स्वप्नमेव झ. । ६—भगवदाज्ञया तव ख. घ. ङ. ज. झ. ञ. ट. । ७—तदनु-भावैः क. ग. घ. ङ. छ झ. ट. । ८—निःसन्दिग्धो ट. । ९—ऽन्तर्हितोऽग्निः ज. । १०—श्री इति नास्ति ख. घ. ङ. छ. ज. झ. ट. । ११—प्रावादि ट. । १२—कियत् घ ङ. छ. ट. । कतिपय दिवसानन्तरं स्वयं कालधर्ममवाप झ. । १३—तत्पुत्रः-इति नास्ति झातिरिक्तेषु । १४—पारयित्वा ख. घ. ङ. छ. झ ञ. । १५—मासचतुष्टयमध्ये-इति नास्ति क. ख. ग. ज. झ. ञ. ट. । १६—०णि समधीत० ञ. । १७—शेषपाणिनीय-छ. । श्रीशेष-पाणिनि-झ. । श्रीशेष पाणिनीय-ट. ।

व्याससूत्र-जैमिनि-सूत्र-गौतम - काणाद - कापिल - पातञ्जल-सूत्र-व्याख्यां समाप्य[1], पौरुषेयीं समस्यां[2] समवलोक्य नातिप्रसन्नमना बभूव।

ततः श्रीवल्लभो[3] वैष्णवतन्त्र-शैवतन्त्र[4]प्राभाकर[5]-कौमारिल-मौद्गलमतादिशास्त्राणि, विष्णुस्वामि-रामानुज[6]-मध्वाचार्य-निम्बादित्यनामकश्रुत्यादिभाष्यसिद्धान्तं[7] परिज्ञाय मायावादिनां[8] दक्षिणापथे प्रवृत्तिं[9] श्रुत्वा दक्षिणापथं[10] प्रस्थितः[11]। तत्र गत्वा[12] विद्यानगरं समायातः।

तत्र कृष्णरायो[13] राजा वर्तते। तत्र[14] मध्वाचार्यमार्ग-तिमिरनाशनप्रदीपः श्रीव्यासतीर्थनामा यति[15] वर्तते।

१—समाप्य-इति नास्ति ख. ज.। २—साङ्ख्यां—ख. ब.। ३—०माचार्यः-क. ग. ब.। ४—शैवतन्त्र इति नास्ति क. ग.। वैष्णवतन्त्र-शैवतन्त्रं-घ. ब. ऋ. ट.। ५—प्राकृत मौद्गल-ऋ.। ६—०नुजाचार्य-ट.। रामानन्द-ऋ.। निम्बार्क-मध्व ब.। ७—स्व स्व सिद्धान्तं-क. ख. ग.। सिद्धान्त-परिज्ञानाय-ज ब.। ८—मायावादिनामिति स्थाने काश्यां तेषामप्रवृत्तिं दृष्ट्वा-इति क. ख. ग. ज. ऋ. ब.। ९—तत्प्रवृत्तिं ज. ऋ. ब ट.। १०—पुनर्दक्षि०-इति ख.। ११—प्रस्थिताः-क. ग. ब.। १२—तानि सर्वाण्यवलोक्य-इति विशेषः क. ख. ग. घ. ब. ऋ.। १३—कृष्णदेवनामा-ख. घ. ङ.। कृष्णनामा ऋ.। तदा तत्र कृष्ण-नामा ज. ब. ट.। १४—तत्र-इति नास्ति ऋ.। १५—यति-स्तत्र-ऋ.।

"मायावादि१गजानीकनाशने सिंहविक्रमः ।
कृष्णद्वैपायनो व्यासो व्यासतीर्थः कलौ युगे ॥"

तत्र२ कृष्णनामा राजा राजसभायां मायावादितत्त्ववादिनोर्विवादं कारितवान् । विवदमानयोस्तयोः षडहान्यतीतानि ।

तदा श्रीवल्लभैः३ श्रुतम्—राजसभायां विद्या४विवादोस्तीति५ । ततो६ राजद्वारमार्गे समागताः । ततो द्वारपालकैरलौकिकीं प्रभां विलोक्य राजानं प्रतिनिवेदितम् । पश्चाद्राज्ञाऽऽगत्य विज्ञप्तिः कृता । तदा राजसभायां प्रस्थिताः ।

तस्मिन्विवादे मायावादिना तत्त्ववादी जितः । तदा श्रीवल्लभो७ माया८वादिनमब्रवीत्—रे माया९वादिन् ! मयि जिते जितम् ।

---

१—वाद् ङ. ट. । २—तदा राजसभायां मायावादितत्त्ववादिनोर्विवदमानयोः षडहान्यतीतानि-इति ङातिरिक्तेषु । ३—०माचार्यैः-क. घ. । ४—विद्या इति नास्ति ङ. । ५—इति-इति नास्ति क ग. चातिरिक्तेषु । ६—तत इत्यारभ्य प्रस्थिताः-इत्येतत्स्थाने तच्छ्रोतुकामा राजसभां प्रस्थिताः-क. ग. । (अत्रैव) समागताः० प्रस्थिताः-इत्यनयोः स्थाने एकवचनान्तः पाठः ख. ट. । तच्छ्रोतुकामा राजसभायां प्रस्थिताः ज. । तच्छ्रोतुकामः श्रीवल्लभः श्रीराजसभायां प्रस्थितः ङ. । ७—०माचार्यैरुक्तं रे माया०—क. ग. । ८—मायावादिनं-इति नास्ति ख. ज. ङ. ञ. ट. । ९—रे मायावादिन् इति नास्ति घ. ङ. । रे रे माया० ज. ।

मायावाद्याह—त्वमप्येहि१। श्रीवल्लभैः२ सह तस्य विवादः३समजनि। श्री४वल्लभैर्मायावाद्यप्रयासेन जितः।

ततो५ राजा श्रीवल्लभानां कनकाभिषेकं कारयामास। पश्चाद्विज्ञप्तिः कृता—स्वामिन्नेतद् द्रव्यमङ्गीकर्तव्यम्। ततः श्रीवल्लभैरुक्तम्—एतद् द्रव्यं न मदङ्गीकारयोग्यं, स्नानजलवत्। ततः श्रीवल्लभाज्ञया तद् द्रव्यं पूर्वं विवदमानाभ्यामुभाभ्यां ददौ। श्रीवल्लभो यथेच्छया प्रस्थातुमारेभे। तच्छ्रुत्वा६ व्यासतीर्थैः स्वशिष्येण राज्ञा सह समागत्य श्रीवल्लभगोत्रनामादि स्तुत्वा७ प्रार्थितम्८।

---

१—भवन्तोप्यायान्तु-क. ग.। २—०माचार्यैः सह वादः क. ग.। श्रीवल्लभेन—ख. ज. ट.। ३—वादः-क. ज.। ४—तदा महाप्रभुचरणैरप्रयासेन मायावादी जितः—क. ग.। श्रीवल्लभाचार्यैरप्रयासेन मायावादिनो जिताः ज.। श्रीवल्लभेनाप्रयासेन मायावादी जितः ञ.। श्रीवल्लभेन माया० ख.। ५—तत इत्यारभ्य ददौ श्रीवल्लभः इत्येतत्स्थाने—तदा तत्र राजप्रसादजं द्रव्यं पूर्वं विवदमानयोरुभयोर्दत्त्वा क.। तदा—इति नास्ति, शेषं-कवत् ख. ग.। अङ्गीकर्तव्यमित्यस्य स्थाने गृहीतव्यं ङ.। तत्र राजप्रसादजं द्रव्यं पूर्वं विवदमानयोर्दत्त्वा-ज. ट.। तत्र राजमहाप्रसादजं० शेषं जवत्-ख.। तत्र राजकारितकनकाभिषेकजं द्रव्यं० शेषं जवत् ञ.। ६—तच्छ्रुत्वा-इत्यारभ्य प्रार्थितमित्यत्र मध्ये-व्यासतीर्थैः समागत्य स्वशिष्येण० क. ख. ग. ट.। व्यासतीर्थैः समागत्य शिष्येण सह राज्ञा ज.। व्यासतीर्थैः स्वशिष्येण राज्ञा सहैव समागत्य श्रीवल्लभः प्रार्थितः-ख.। व्यासतीर्थैः समागत्य शिष्येण राज्ञा सह० ञ.। ७—श्रुत्वा-क. ख. ग. ज. ञ. ट.। ८—प्रार्थितं-इत्यारभ्य-तत्र व्यासतीर्थैः-इत्येतन्मध्ये-अत्रभवद्भिः कियत्कालं स्थातव्यं। अयं राजा तुलापुरुषदानं

तत्र व्यासतीर्थैः श्रीवल्लभानुभावमलौकिकमवलोक्य मनसि विचारितम्—"एते१ महानुभावाः"—इति नमनविज्ञप्त्यादिकं कर्तव्यमेव, इति तत्सर्वं कृतम्। "यदीमे२ऽस्मत्सम्प्रदायिनो भवेयुस्तर्ह्यस्मन्मार्गरक्षा समीचीना भवेत्३। तदेतेभ्यः४ संन्यासं दत्वा स्वमार्ग५दीक्षां दत्वाऽऽचार्यपदव्यामभिषेचयिष्यामि६।"

---

करिष्यमाणोऽस्ति। तत्र भवद्भिराचार्यैर्भाव्यं। ततः कियन्तं कालं वल्लभैः स्थितं। तत्कर्म कारयित्वा तुलादानसुवर्णं गृहीत्वाऽर्धद्रव्येण रत्नखचितमेखलां कारयित्वा तत्रस्थश्रीविट्ठलाख्यस्य भगवतः समर्पिता। अर्धद्रव्यस्यार्धेन पैतृकं ऋणं दत्तवान्। चतुर्थांशो वर्तमानोऽग्रे गार्हस्थ्ये यज्ञक्रियायां भविष्यति-क. ख. ग. ज. ट.। अत्र भवद्भिः कियत्कालं स्थातव्यं। तदा कियन्तं कालं श्रीवल्लभाचार्येण स्थितं। तदा कृष्णेन राज्ञा श्रीवल्लभाचार्यस्य सुवर्णस्नानं कारितं-तदर्धद्रव्येण० शेषं कवत्-ज.॥ अत्र भवद्भिः कियत्कालं स्थातव्यं। कृष्णराजा तुलापुरुषदानं करिष्यमाणोऽस्ति तत्र भवद्भिराचार्यैर्भाव्यं। श्रीवल्लभो न तन्मेने। तत्र कियन्तं-कालं तत्रैव वल्लभेन स्थितं। समये तुलापुरुषदानं कारयित्वा आचार्याय वेदविदे कस्मैचित्प्रीतिदत्तं बहुसुवर्णं तद्दापयित्वा स्थिताः। तदनु राज्ञा सुवर्णेन स्नानं कारितं। तद् ब्राह्मणेभ्यो वेदविद्भयो दत्तं। नतु तन्मध्ये यत्किञ्चिदप्युपयुक्तं, स्नानजलत्वात्। तदनु विज्ञाप्य (राज्ञा) अनन्तसहस्रपरिमितंद्रव्यं समर्पितं। तद् गृहीत्वाऽर्धद्रव्येण० शेषं कवत्-झ.। १—एते-इत्यारभ्य तत्सर्वं कृतं-इत्यन्तं नास्ति ङ. च. छ. झातिरिक्तेषु। २—यद्ययमस्म० भवेत्-ख. ज. झ. ञ. ट.। ३—स्यात्-ज.। ४—एतस्मै- ज.। तस्मादस्मै-झ.। ५—मार्गीय-ज.। ६—अभिषिञ्चामि-झ.। अभिषेचयामि-ट.। अभिषेक्ष्यामि-ज.।

एतस्मिन्नन्तरे[१] विष्णुस्वामिसम्प्रदायी द्राविडदेशीयो[२] बिल्वमङ्गलः श्रीवल्लभाचार्याणां[३] स्वप्ने आत्मानं दर्शयामास, आह च—न युष्माभि[४]र्व्यासतीर्थशिष्यैर्भाव्यम्। अहं[५] भगवतः श्रीदिव्यकिशोरमूर्तेः श्रीकृष्णस्य वाक्यात्त्वद्दर्शनाकाङ्क्षया तिरोभूय स्थितोऽस्मि[६]। तया[७] स्थित्या सप्तशत[८] वर्षाण्यतीतानि, श्रीविष्णुस्वाम्य[९]नन्तरमस्मन्मार्गे[१०] सप्तशतान्याचार्या बभूवुः, चरमोऽहम्। यदा भगवदाज्ञया महा[११]देवांशेन शङ्कराचार्येण[१२] भगवन्मार्गात्सर्वोऽपि जनो भ्रामित[१३]स्तदा मया श्रीकृष्णं प्रत्युक्तम्—नय मां निज[१४]मूर्त्तं पार्श्वमिति। तदा[१५] भगवतोक्तम्—"भविष्य[१६]त्यस्मिन्युगे मन्मुखाग्न्यवतार[१७]रूपः श्रीवल्लभनामा। तद्रूपेण[१८] जीवानां चतुर्लक्षं केवल भक्तिमार्गेणोद्धरिष्यामि।

---

१—एतस्मिन्नन्तरे-इत्यारभ्य-चरमोऽहं-इत्यन्तं नास्ति ब. क. कृ.। २—द्राविडदेशीयो-इति नास्ति ट.। ३—श्रीवल्लभस्यपुरः-क. म.। रात्रौ श्रीवल्लभाय स्वात्मानं-ब.। वल्लभाचार्यस्य-ट.। ४—त्वया व्यास० ०शिष्येण—क. म. ट.। भवद्भिर्व्यासतीर्थशिष्यतया-ब। ५—अहञ्च-ब। भगवतः इति नास्ति ब.। ६—पञ्चवृक्षे-इति विशेषः ब.। ७—तत् ब. म.। तथा-क. ट.। ८—शतं-ब.। ९—विष्णुस्वामिपादा० ब.। १०—अस्मिन्भक्तिमार्गे-क.। ११—श्री-महा० ब. म. ट.। १२—शङ्करेण-ब.। १३ भ्रंशितः क.। १४—स्व क.। १५—तदा स्वप्ने-ब. क. कृ.। श्रीभग०-ट.। १६—बहुवचनान्तः पाठः क. ग.। भविष्याम्यहमस्मिन्युगे मुखा०-ब.। १७—०तारो-ऽवल्लभ०-क.। १८—तस्मिन्नहमाविश्य-क. ख. क. म. ट.। तदा-ब.।

तदात्मज१रूपेण द्वात्रिंशल्लक्षजीवानुद्धरिष्यामि, अन्यांश्च बहुशो जीवाँस्तत्पुत्रादिरूपेणोद्धरिष्यामि । विष्णुस्वामिमतं सर्वं तस्मै२ प्रोक्त्वा तन्मतं श्रुत्वा३ पश्चान्मत्समीपं त्वमायास्यसि ।

रामानुजमार्गीय४सृष्टिः पाद्मकल्पीया, मध्वाचार्य-मार्गीय-सृष्टिः श्वेतकल्पीया, निम्बादित्यमार्गीयसृष्टिः सौरकल्पीया, विष्णुस्वामिमार्गीयसृष्टिः सारस्वतकल्पीया। पद्मोक्तः सिद्धान्तो रामानुजीयानाम्, लक्ष्मीगरुडादयोप्याचार्याः । वायु५ हनुमद्भीमसेनावतारा आचार्या मध्वमार्गीयाणाम्, भारत-रामायणीयः सिद्धान्तः । श्रीभगवद्गीता-श्रीभागवतोक्तः सिद्धान्तो विष्णुस्वामि-मार्गीयाणाम्, रुद्रकृष्णद्वैपायनशुकादयोऽत्राचार्याः । श्रीसूर्य-मण्डलस्थ - हिरणमयपुरुषप्रोक्तश्रुत्यादीनां सिद्धान्तो निम्बा-

---

१—तदात्मज-इत्यारभ्य-रूपेणोद्धरिष्यामि-इत्यन्तं नास्ति क. ख. ग. ज. झ. ञ. ट. । २—तेभ्यः-क. ग. । ३—तन्मतं श्रुत्वा इति नास्ति क. ख. ग. झ. ञ. ट. । तस्माद्विष्णुस्वामिमतं सर्वं तस्मै-निवेदयित्वाऽलभ्यलाभं तद्दर्शनञ्च लब्ध्वा पश्चात्०-ज. । ४—मार्गीया-ख. ज. झ. ञ. ट. एवमग्रे स्थलत्रयेऽपि । ५—वायुहनु० इत्यारभ्य-भगवन्मुखं-इत्येतत्स्थाने-श्रीलक्ष्मीनारायणावुपास्यस्वरूपम् । भारत-रामायणीयसिद्धान्तो मध्वानाम्, वायुहनुद्भीमसेनादयोऽप्या-चार्याः, उपास्यस्वरूपं श्रीरामचन्द्रः । श्रुतिस्मृत्यादीनां सिद्धान्तो निम्बादित्यमार्गीयाणां, सूर्यमण्डलस्थहिरण्यपुरुष आचार्यः, स एवोपास्यरूपम् श्रीभगवद्गीताश्रीभागवतोक्तसिद्धान्तः श्रीविष्णु-स्वामिमार्गीयाणां, अग्निरचार्यो भगवन्मुखं, श्रीशुकवागमृताब्धीन्दुः श्रीगोपीजनवल्लभ एवोपास्यरूपम् । नारद० ज. ।

दित्यमार्गीयाणाम्, तदेवोपास्यस्वरूपम् । श्रीलक्ष्मीनारायणो रामानुजीयानामुपास्यरूपौ । श्रीराम१स्तत्त्ववादिनाम् । श्रीविष्णुस्वामिमार्गीयाणां २ शुकवागमृताब्धिचन्द्रः३ श्रीगोपीजनवल्लभ एव४, अत्राग्निराचार्यो भगवन्मुखम् । नारदीयपञ्चरात्रवैखानसादा५वुक्तविधिना दीक्षापूजादिकं सम्प्रदायत्रये ।

श्रीविष्णुस्वामिमार्गे मर्यादा६मार्गीयात्मनिवेदनपूर्वको भक्तिमार्गः । अस्मन्मुखाग्न्यवतारश्रीवल्लभप्रोक्त-पुष्टिमार्गे पुष्टिमार्गीयात्मनिवेदनपूर्वकं७ प्रेम्णैव भक्तिमार्गः८ । सम्प्रत्यस्मन्मार्गीया अपि शङ्करमार्गीयै९र्भ्रान्ताः । अस्मि१०न्विद्या नगरे श्रीविट्ठलाख्यः पुरुषोत्तमोऽस्ति, असावेव११ भवतामात्मसमर्पणं कारयिष्यति१२ । ततो विष्णुस्वामिमार्गः प्रकाशनीयः ।"

इत्युक्ते श्रीवल्लभैः प्रबुद्धम् । ततः प्रभाते१३ श्रीवल्लभाचार्यै१४र्व्यासतीर्थस्याग्रे कथितो१५ वृत्तान्तः । तच्छ्रुत्वा व्यासतीर्थे१६-

---

१—श्रीरामचन्द्रलक्ष्मणौ—ख. ट. । २—तु-इत्यधिकं ख. ट. । ३—०ब्धीन्दुः ख. ट. । ४—उपास्यः इति विशेषः ख. । ५—०द्युक्त ख. झ. ञ. । ६—मर्यादा-इत्यारभ्य पुष्टिमार्गीय-इत्यन्तं नास्ति क. ख. ग, ज. झ.ञ. । ७—पूर्वक प्रेम्णैव सेवा भक्ति० इत्यधिकं ज. । ८—भक्तिः क. ग. । ९—मायया-क. ख. ग. झ. ञ. ट. । १०—अस्मिन्-इत्यारभ्य तावत्स्थास्यति-इत्यन्तं नास्ति घ. ङ. । ११—स एव झ. । १२—कारयिता ट. । १३—प्रभाते-इति नास्ति ज. । १४—०भाचार्येण ख. । ०मेन झ. ञ. ट. । १५—सर्वो वृत्तान्तः कथितः झ. । वृत्तान्त कथः-ज. । कथितः सर्वो वृ० ञ. ट. । १६—तीर्थैः ज. झ. ञ. ट. ।

नोक्तम्—तद्यूयं१ स्वसिद्धान्तं मह्यमुपदिशत। ततः२ श्रीवल्लभाचार्यै३रुक्तम्—न तुभ्यमहमुपदेष्टुकामः।

एतस्मिन्नन्तरे उभयो४रप्यात्मनिवेदनं श्रीविट्ठलनाथेन स्वप्ने५ कारितम्। श्रीवल्लभाचार्या६न्प्रति श्रीविट्ठलनाथेनोक्तम्—"भवद्भिर्विष्णुस्वामिमार्गोऽङ्गीकर्तव्यः। विष्णु७स्वामिकृत-श्रुतिव्याससूत्रगीताभागवतभाष्यनिबन्धादि८ कालेनान्तर्हितम्। अतो-भवद्भिः कृष्णद्वैपायनोद्धवबिल्वमङ्गलादि९वचनं निशम्य पुनः श्रुत्यादीनां भाष्यं श्रीकृष्ण१०विष्णुस्वाम्यभिप्रायेणारम्भणीयम्। यतोऽग्निवागीश्वर११स्त्वमसि। मार्गो१२ऽयं तावत्स्थास्यति—

"याव१३र्षायुतकलिर्यावद्गोवर्धनो गिरिः।
तावन्मार्गो मदीयोऽयं, सन्ततिश्च भविष्यति॥"

इत्युक्त्वा १४न्तर्हितः।

---

१—अतस्त्वं स्वसिद्धान्तं मह्यमुपदिश-ज. अ.। तत्त्वं सिद्धान्तं मह्यमुपदिश-झ.। तत्सिद्धांतं त्वं मह्यमुपदिश-ट.। २—ततः इति नास्ति ज. झ. ञ. ट.। ३—श्रीवल्लभैः ज.। श्रीवल्लभेन-झ ञ. ट.। ४—श्रीविट्ठलनाथेनोक्तमात्मनिवेदनं कारितम्। स्वप्ने श्रीवल्लभाचार्यं प्रत्युक्तम्-ज.। ५—स्वयमेव-ञ. ट.। ६—श्रीवल्लभं-झ. ञ. ट.। श्रीवल्लभाचार्यं-ज.। ७—श्रीवि० ज. ञ.। ८—०दीनि० हितानि झ.। ९—०दीनां-झ.। १०—कृष्णद्वैपायन-इति विशेषः ट.। ११—वागीश-ज.। श्वरस्याग्नेस्तव मनसि मार्गो० झ.। १२—एष-इति विशेषः ज.। १३—यावद्गंगा प्रकटजला यावद्गोवर्धनो गिरिः। तावदयं मार्गस्तवान्वयश्च भविष्यति-क. ख. ग. ज. ञ.। यावद्गंगा० तावन्मार्गस्त्वदीयोऽयं सन्तति० झ.। १४—श्रीविट्ठलेशो भगवान्-इति विशेषः झ.।

ततस्तस्मा[1]त्प्रस्थितम् । पुनः प्रयागे साक्षा[2]द्बिल्वमङ्गल-दर्शन[3]मजनि । श्रीवल्लभा[4]न्प्रति बिल्वमङ्गलेनोक्तम्—इतो[5]भवद्भिः काश्यां गन्तव्यम् । तत्र [6] सर्वोपनिषद्गीताव्याससूत्रभागवत-भाष्याण्यवलोकनीयानि । सम्प्रति कलौ सर्वशास्त्रार्थो मायावादिभि-र्विपरीततया [7] प्रतिपादितोऽस्ति । तद् दृष्ट्वा [8] ब्रह्मवाद [9] विरोधान्मनसि खेदे जाते मया [10] श्रीकृष्णं प्रति विज्ञापितम् । तदा स्वप्ने मां प्रत्युक्तम्—"मन्मुखाग्न्यवतारश्रीवल्लभाचार्याणा-माविर्भावो जातः, तद्दर्शनं कृत्वा तन्मुखात्तदीयसिद्धान्तं श्रुत्वा पश्चात्कृतार्थो भविष्यसि ।" बदर्याश्रमे[11] गन्तव्यम् । तत्र

---

१—तस्मात्-इत्यारभ्य-अवलोकनीयानि-इत्येतस्याने-तस्मात् बिल्वमङ्गलेन प्रस्थितं । प्रयागे समागत्य श्रीवल्लभमपश्यत् । साष्टाङ्गनमस्कारं कृत्वा बिल्वमङ्गलेन श्रीवल्लभं प्रत्युक्तम्-घ. ङ. छ. । तस्मात्-इति नास्ति झ. । २—साक्षात्-इति नास्ति ख. । साक्षाद्बिल्वमङ्गलेन श्रीवल्लभं प्रत्युक्तं-ज. । ३—साक्षात्समजनि-ख. । समजनि-झ. । ४—०माचार्यान्-ज. । बिल्वमङ्गलेन श्रीवल्लभं प्रत्युक्तं-झ. ट. । ५—अथ-जातिरिक्तेषु । ६—तत्र इति नास्ति जातिरिक्तेषु । ७—०रीततः-क. ग. । ८—दर्शनेन-ज. ञ. । दर्शने-झ. ट. । तं दृष्ट्वा छ. । ९—०वादिविरोधतः-ख. । ०वादिविरोधात्-ञ. । १०—मया-इत्यारभ्य-भविष्यसि-इत्यन्तं नास्ति क. ख. ग. ब. झ. ञ. ट. । ११—बदर्याश्रमे-इत्यारभ्य-अन्तर्हितः-इत्यन्तं नास्ति घ. ङ. छ. ।०श्रमं-ख झ ट. ।

साक्षात्कृष्णद्वैपायनदर्शनं भविष्यति, तयोद्धवस्यापि। तत्प्रसाद-वाक्यतः सर्वज्ञत्वं भविष्यति—इत्युक्त्वा[१]न्तर्हितः।

ततः[२] श्रीवल्लभाचार्यैः काश्यां गत्वा तथैव कृतम्। पश्चाद्बदर्याश्रमं गत्वा व्यासदर्शनाकाङ्क्षया स्थितम्। एकदा साक्षाद्व्यासदर्शनमभूत्। तदा व्यासेन[३] श्रीवल्लभाचार्यम्प्रति "सर्वज्ञो भव" इत्युक्तम्। "त्वयि साक्षात् श्री[४]कृष्णावेशो भविष्यति। मन्मतानुसारि श्रीभागवत-व्याससूत्रादि[५]भाष्यं कर्तव्यम्। सम्प्रत्यासुरसर्गो[६]त्पन्नैर्मायावादः प्रवर्तितः, तमपाकुरु"—इत्युक्त्वाऽन्तर्हितं[७] व्यासैः।

तदनु हरिद्वारमागत्य कुरुक्षेत्रे श्रीवल्लभाचार्याः[८] समागताः। तत्र स्थानेश्वरनाम नगरम्। तत्र रामानन्द[९]नामा तान्त्रिक[१०]-वैष्णवः। तद्गृहे गत्वा[११] तदातिथ्यं गृहीत्वोपविष्टम्

१—बिल्वमङ्गलोऽ-इति विशेषः झ.। अन्तर्हितः, तद्वृत्तान्तं श्रुत्वा श्रावितः पश्चात्कृतार्थो जातः-इति विशेषः क. ख. ग. छ.। २—ततः-इत्यारभ्य व्यासैरित्यन्तं नास्ति घ. ङ. छ.। श्रीवल्लभैः-ज.। श्रीवल्लभेन-झ. ञ. ट. ३—श्रीमदाचार्यं प्रति व्यासेनोक्तं-सर्वज्ञो भवेति-ज.। व्यासेन श्रीवल्लभं प्रति सर्वज्ञस्त्वं भव-झ. ञ. ट.। ४—श्री इति नास्ति-ज. झ. ञ. ट.। ५—०देः०-झ.। भाष्यं कार्यं-ज.। ६—मार्गो-क. ग. झ. ट.। सर्गोद्भवैः-ज.। सर्गोत्थैर्मायावादं प्रवर्तितमपाकुरु-ञ.। ७—०र्हितो व्यासः-ट.। ८—वल्लभः समागतः-ब. ङ. ट.। श्रीवल्लभः समा०-छ. ञ.। ९—इति-इति विशेषः ज.। १०—तान्त्रिको-ज.। यान्त्रिको-क. ख. ग. घ. झ. ट. ११—गत्वोपविष्टम्-छ.। सर्वसन्मानं गृहीत्वोपविष्टः-झ.। समागत्य-ञ.। तदातिथ्य-मङ्गीकृतमुपविष्टञ्च-ज.। गत्वा०० विष्टः ट.।

तेनाऽ१ध्ययनादिकमपि पृष्टम् । तदा २ श्रीभागवतैकश्लोकस्य व्याख्यानं कृतम् । तच्छ्रुत्वा पुनस्तस्माच्छुश्रूषा ३ समजनि । आह च—कियत्कालमत्र स्थातव्यम्, श्रोष्येऽहं भवन्मुखाच्छ्री४भागवतम् । श्रीवल्लभेनोक्तम्—यदीश्वरेच्छा ५ ।

एतस्मिन्६नन्तर आगमोक्तविधिना रामानन्दो विष्णोः पूजां ७ कर्तुमारेभे । तत्रैका शालिग्राम८ शिला, चतुर्भुजा९ भगवन्मूर्तिश्च । शालिग्रामशिलायां तस्य महती श्रद्धा, भगवन्मूर्तौ तादृशी न, तद्दृष्ट्वा श्रीवल्लभ १०स्तमाह, त्वमुभयत्र११ सादरं पूजां कुरु । रामानन्द आह१२—शालिग्रामशिला स्वायम्भवी१३, वज्रकीट१४ विनिर्मिता । प्रतिमेयं कृत्रिमा, अतः शालिग्रामे विशेषः । श्रीवल्लभस्तमाह१५—प्रतिमां साक्षाद्द्रष्टुव्याऽऽचर्य, शालिग्राम१६ शिला तन्मन्दिर१७मिति । यथोक्तं स्कान्दे—

---

१—तेनोक्तं किमधीतं तच्छ्रुत्वाऽऽचार्यैः श्रीभागवतश्लोकैकस्य-ज. । २—तत्र श्रीभा० श्लोकैकव्याख्यानं श्रुत्वा पुन० क. ख. ग. झ. ट. । भाग० श्लोकस्यैकस्य व्याख्यानं कृतं श्रुत्वा पुनः-ज. । ३—तस्य-इति विशेषः ञ, । समजनि रामानन्दस्य, स आह च-भवद्भिः-ज. । ४—श्री-इतिनास्ति ब. ञ. । ५—०च्छेति-ज. । ६—तन्त्रान्तरे झ. । ७—पूजनं-ट. । ८—शैला चतुर्भुजा भगवन्मूर्तिः शालिग्रामशिला च—ञ. अ. । ९—एका शिलामयी चतुर्भुजमूर्तिः झ. । १०—श्रीमदाचार्या स्तमाहुः—ज. । ११—उभयोः—झ. । उभयत्र समानां—ञ. । १२—अब्रवीद्रामानन्दः—घ. ङ. ट. । रामानन्दोऽब्रवीत्—झ. । १३—प्रायः स्वयंभवा—ञ. । १४—०टङ्क—ट. । १५—०आचार्या-स्तमाहुः—ज. । १६—शालिग्राम०-इत्यारभ्य-मन्दिर मित्यन्तं नास्ति-घ. ङ. ट. । १७—भगवन्—झ. ।

"न तथा रमते लक्ष्म्यां[1] न तथा स्वपुरे हरिः।
शालिग्रामशिलाचक्रे स[2] यथा रमते सदा॥"

अतः शालिग्रामशिला मन्दिरमेव। तथा च[3] पाद्मे—

"अर्च्ये विष्णौ शिलाधीर्गुरुषु नरमतिर्वैष्णवे जातिबुद्धिः।
विष्णोर्वा[4] वैष्णवानां कलिमलमथने पादतीर्थेऽम्बुबुद्धिः।
श्रीविष्णोर्नाम्नि मन्त्रे कलि[5]कलुषहरे शब्दसामान्यबुद्धिः।
विष्णौ सर्वेश्वरेशे तदितरसमधी[6]र्यस्य वा नारकी सः॥"

श्रीजगन्नाथविट्ठलनाथादिस्वरूपेषु[7] साक्षात्त्वं लोके[8] प्रसिद्धम्। एवं श्रीवल्लभोक्तं श्रुत्वाऽपि रामानन्दो न[9] मेने। एवं मध्याह्न-पूजायां विवादः समजनि। रात्रिपूजायामपि श्रुत्वा न मानयामास। तदा[10] वल्लभस्य चित्ते[11]रोषः समजनि[12]। निशि रामानन्देन सम्पुटमध्ये भगवत्प्रतिमामुत्तानशायिनीं कृत्वा हृदि शालिग्राम-शिला स्थापिता।

ततो व्यतीतायां रात्र्यामरुणोदये[13] स्नानं कृत्वा पूजां कर्तुमुभा-

---

१—लक्ष्म्या—क. ख. ग.। २—यथा स रमते हरिः—ज.। ३—तत्रैव—ज. ञ.। ४—वैं—क. ख. ग. घ. ङ. च.। ५—ऽखिल० छ झ ट। नर०—ज.। ६—कुमतिः-ज.। ७ नाथ प्रतिमायां-क. ख. ग.। ०लेश्वर प्रतिमायां सा० लोक प्र०-ज. ञ.। नाथप्रतिमायां तु-झ. ट.। ८—केवलं-छ.। ९—न मानयामास- घ. ङ. छ.। १०—तदा-इति नास्ति क. ख. ग. ज. ञ. ट.। ११—चित्ते-इति नास्ति क. ग. घ. ङ. झ. ट.। १२—समभूत्-घ. ङ. छ.। १३—०दयवेलायां स्नातुं पूजां कर्तुमुभावपि गतौ-ज. झ. ञ.।

वपि भ्रातरौ[1]गतौ, कृता[2]वश्यकनित्यौ जातौ। यदा रामानन्दः पूजार्थं सम्पुटमुद्घाटयामास[3], तदा शालिग्रामशिला द्वादशधा खण्डशो जाता । तद्[4]दृष्ट्वा तस्य शङ्करमिश्रनाम लघुभ्राता तमाह—रामानन्द भ्रातः[5] ! त्वं व्रज पृच्छ, कोयं महानुभावः, यद्वाक्याकरणे महाननर्थः समजनि । ततो[6]गत्वा तेन पृष्टम्, तदा[7] श्रीवल्लभैः किमपि नोक्तम् । ततः श्रीवल्लभस्तीर्थान्तरं प्रस्थितः ।

श्रीवल्लभेन[8] नववर्षपर्यन्तं पञ्चदशशतयोजनैरेका प्रदक्षिणा कृता । एवं तीर्थाटनव्याजेन प्रदक्षिणाद्वयं कृतम्[9] । व्युपारमत् ,

---

१—भ्रातरौ-इतिनास्ति क. ख. ग. ट. । २—स्नात्वा कृता० ख. । ३—घाटितवान्-ख. । ०घाटयति-ज. । ४—तान्दृष्ट्वा लघुभ्रातमाह, लघु भ्राताऽतमाह घ. ङ. च. छ. । तथा दृष्ट्वा तस्य शङ्करमिश्रनामा लघुभ्राता यस्तमाह रामानन्दः ज. । ५— सम्भ्रान्तस्त्वं क. ग. । ६—तं—क. ख. ग. । तदा तेन गत्वा पृष्टं, तैरुक्तं-ज. । ७—तदेत्यारभ्य श्रीवल्लभः इत्येतत्स्थाने-यथा शालिग्रामशिला जाता तथाऽयमपि भविष्यति, इत्युक्त्वाऽसौ० क. ख. ग. ब. । तदा वल्लभेन न किञ्चिदप्युक्तं तदा यथा शालि०—भविष्यति-इति मनसि कृत्वाऽसौ ख. । तदाचार्यैरुक्तं, यथा०—तथा त्वमपि भविष्यसि-ज. । ८—श्रीवल्लभेन नववर्षपर्यन्तं भूमौ० क. ख. ग. । श्रीवल्लभेन वर्षपर्यन्तं भूमेः पञ्चशतयोजनाया एकप्रदक्षिणा कृता-घ. ङ. च. श्रीवल्लभो नववर्ष-पर्यन्तं भूमौ पञ्चदशशतयोजनामेकां भूप्रदक्षिणां स्वयं तीर्थाटनव्याजेन कृतवान्, ततः प्रदक्षिणाद्वयं पुनःकृतवान्-ज. । ९—कृतवान्-ज. । कृत्वा व्युपरराम-ट. ।

असङ्ग्रही, एकः सेवको मेवनकृष्णदासः१ सङ्गेऽभूत् । मरुस्थले, पर्वते, जले वा यात्रद्भोजनादिकर२मपि नावलोक्यते, तावदीश्वरेच्छया यत्र कुत्रापि भोजनादिप्राप्तिर्भवत्येव, न तदधिक३सङ्ग्रहोऽपेक्षा च । सङ्ग्रहस्त्वेतावदेव४—श्रीभगवद्गीता, भागवतमूलपुस्तकं, शालिग्रामशिलैका५ ।

यद्दिने रामानन्दगृहात्प्रस्थितं तस्मिन्दिने६ कस्यापि७ प्राप्तिर्न जाता, महदसुखं समजनि। रामानन्दगृहे रात्रौ स्वप्ने८ श्रीवल्लभं प्रति भगवतोक्तम्—"त्वमेनं भागवतं श्रावय" तद्दोषवशान्न श्रावितम्९, तत एवं जातम् । पुनर्यत्र गत्वा सुप्तं तत्र स्वप्ने तु श्रीकृष्ण-कृष्णद्वैपायनौ दृष्टौ । श्रीकृष्णः कृष्णद्वैपायनं प्रत्युवाच—"त्वत्तः श्रीभागवतं प्रादुरासीत्, तदर्थज्ञापनाय मन्मुखमेवाग्निर्वल्लभो-ऽयमवतीर्णः । मदाज्ञया१०ऽपि मदीयान्प्रति भागवतार्थं११ न कथयति ।" तदा व्यासेन श्रीवल्लभाचार्या१२ आज्ञप्ताः—भगवदा-

---

१—कृष्णदास नामा इत्येव जातिरिक्तेषु । २—०दिकमवलोक्यते-न-ट. । भोजनादि प्रतिदिनमालोक्यते-ख. । भोजनादि प्रतिदिनमवलोक्यते झ. । ३—तदधिकं क. ख. ग. । सङ्ग्रहापेक्षाच-च. ज. ट. । व ततोऽधिका सङ्ग्रहापेक्षा च—झ. । ४—सङ्ग्रहस्त्वेतावा० इति नास्तिझातिरिक्तेषु । ५—च पार्श्वे वर्तते अथ यद्दिने-इत्यधिकं ज. । ६—तद्दिने ज. । ७—किमपि—क. ख. ग. ज. झ. ट. । ८—स्वप्ने भगवतोक्तम्—क. ख. ग. ट. । ९—कृतं—क. ख. ग. झ. ज. ट. । १०—ममाज्ञया—ज. ट. । ११—०तार्थं कथयिष्यति—झ. । १२—श्रीवल्लभं प्रत्युक्तं—ज. । ०चार्य प्रत्याज्ञप्तं भोः ! ज. ।

ज्ञया भागवतार्थः प्रकटनीयो वक्तव्यश्च। ततः श्रीवल्लभो भगवन्तं[1] प्रत्याह—रामानन्दोऽयं त्वदीयो न वा? भगवानाह—मदीय एव। श्रीवल्लभ आह—नायं[2] ममाज्ञाकारी। भगवानाह—"अयं कस्मिंश्चित्संग्रामेऽर्जुनपुरःसरो भूत्वा प्राणानत्रासृजत्। अस्य जन्मनां सहस्रं भावि, तेन त्वदुक्तं सिद्धान्तं न मन्यते। बहिर्मुखश्च भविष्यति। त्वयास्य पुनर्गृहं[3] गत्वा भागवतं वक्तव्यम्।" ततः श्रीवल्लभेन प्रार्थितः श्रीकृष्णो जन्मशतमवशेषतया कृतवान्। ततस्तैः[4] प्रबुद्धम्—पुनस्तद् गृहं गत्वा स्वमार्गदीक्षामस्मै[5] दत्त्वा कियद्भागवतं कथितम्। तदुत्पन्ना शङ्करनामा सर्वात्मना श्रीवल्लभं प्रपन्नः। यः[6] प्रभुदास इति विश्रुतः।

ततः श्रीवल्लभः काश्यामाजगाम। एतस्मिन्नन्तरे श्रीकृष्णस्याज्ञा जाता—"त्वं गृहस्थो भव[7]"। श्रीवल्लभो न तन्मेने। तदा महानुपद्रवो धूर्तेभ्यः कष्टपाशलक्षणः समजनि। ततस्तैर्विचारितम्—पूर्वं तीर्थाटनं[8] कुर्वतो मम किमप्युपद्रवो न जातः, सम्प्रत्यत्र स्थानेऽपि[9] जातः। एवं तत्क्लेश[10]मुक्तं विचार्य सुप्तम्। पुनः स्वप्ने

---

१—श्रीकृष्णं—म.। २—ममाज्ञा कार्यं ऽयं न—ट.। ३—गृहे—म. ब. ट.। ४—तेन—म. भ.। ५—अस्य-जातिविक्तेषु। ६—यः इति नास्ति भ.। प्रभुदास इति नाम्ना ब.। ७—भवेति-ज.। ८—तीर्थाटने कोप्युपद्रवो न जातः—ट.। ९—अपि इति नास्ति ब. म.। अति जातः—ज.। १०—तत्कृच्छ्रान्मुक्तैः—म.। क्लेशान्मुक्तेन—ज.। तत्क्लेशात्मुक्तैः—क. ख. ग. ट.।

श्रीकृष्णेनोक्तम्—"विवाहं १ कुर्विति ।" श्रीवल्लभो भगवन्तं प्रत्याह—किं गृहाश्रमेण, अहं त्वयैव२ कृतार्थोऽस्मि, न विषयेषु मे मनः३। भगवानाह—तव४ गृहेऽहमवतितीर्षुरस्मि रूपद्वयेन। तयोर्नाम्नी—गोपीनाथविट्ठलेश्वरौ। इति भगवद्वाक्यात्स्वप्नान्ते क्रमेण काश्यां गतम्५। तत्र गत्वा विवाहमकार्षीत्। अग्निपरिग्रहश्च६ कृतः। ततोऽग्निहोत्रादिविधिना यथादेशं७ यथाकालं भगवन्तं नानायज्ञैरियाज।

ततः पुनरेकदा श्रीकृष्णस्याज्ञा समजनि। "मायावादिभिःसार्द्धं विवादं कृत्वा८ मायावादमपनय।" ततः सुदिन९मवलोक्य भगवतो मृडानीपते१०र्विश्वेश्वरस्य११ द्वारि पत्रावलम्बनं कर्तुमारेमे। तद्यथा लिखितम्—

"श्रीकृष्णस्य प्रसादेन मायावादो निरा कृतः।
अवैदिको, महादेवस्तत्र साक्षी न १२ संशयः॥
ये वैदिका महात्मानस्तेषाञ्चानुमितिस्तथा।
अवेदविन्न मनुते मया१३ चोपेक्षितः पुनः॥

---

१—विवाहमित्यारभ्य०-मे मनः इत्येतत्स्थाने गृहस्थो भव, तदा श्रीवल्लभेनोक्तं न विषयेषु मन्मनः—ट.। २—त्वयैव,—क.। ३—मन्मनः—क.। ४—त्वद्गृहे बलदेवेन सहाहमवतितीर्षुरस्मि स्वरूपद्वयेन—ज.। ५—गतः—क.। ६—च-इति नास्ति क. ख. ग.। ७—यथादेशं-इति नास्ति-क। ८—कुरु-ट.। ९—मुहूर्तादिकं-इति विशेषः ज.। मुहूर्ताद्य०-इति विशेषः क. ञ. ट.। १०—विमुक्तिपतेः-इति विशेषः ज. ञ.। ११—विश्वेश्वरस्य-इति नास्ति क.। १२—च शङ्करः-घ. ङ. च. छ.। १३—अविद्वचप्यनुमते यथा० क.।

स्थापितो ब्रह्मवादो हि सर्ववेदान्तगोचरः ।
काशीपतिस्त्रिलोकेशो महादेवस्तु१ तुष्यतु ॥
कस्यचित्तत्र२ सन्देहः स मां पृच्छतु सर्वथा ।
न भयं तेन कर्तव्यं ब्राह्मणानामियं गतिः ॥
डिण्डिस्तु वादितो द्वारि विश्वेशस्य मयात्र हि ।
विद्वद्भिः श्रवणं कार्यं ते३हि सन्मार्गरक्षकाः ॥"

तत्र ये विद्वांसो ब्राह्मणाः सन्यासिनश्च शब्दब्रह्मणि कृतश्रमाः पत्रावलम्बनं श्रुत्वा सर्वे४ समेत्य श्रीवल्लभं५ पप्रच्छुः—को मायावादः, किंलक्षणः६, यो भवद्भिर्निराक्रियते । को ब्रह्मवादो यो भवद्भिः स्थाप्यते । तावदिदं वक्तव्यम् । श्रीवल्लभै७रुक्तम्—भवन्तो ब्रुवन्तु—किं ब्रह्म, कीदृशोऽयं प्रपञ्चः, कीदृग्जीवः । ततस्तैरुक्तम्—मिथ्या प्रपञ्चः, निर्धर्मकं ब्रह्म, जीवो व्यापक८त्वाद् ब्रह्मैवेति वेदार्थो भगवता शङ्कराचार्येण९ दर्शितः । तच्छ्रुत्वा श्रीवल्लभ आह—अयमेव१० मायावादः, मयाऽसावेव११ निराक्रियते । ब्रह्मवादलक्षणं श्रूयताम्—सत्योऽयं प्रपञ्चः, सधर्मकं१२

---

१—ऽपि-ख. । तुष्यति-क. ख. ग. । २—स्वय-क. ख. ग. घ. ङ. ट. । ३—ये-घ. च. छ. । ४—पत्रावलम्बनं० सर्वे-इति नास्ति-व्यतिरिक्तेषु । ५—०माचार्यान्-ज. । ६—किंलक्षणः-इति नास्ति घ. ङ. च. छ. । ७—वल्लभेन-क. ख. ग. ङ. ज. ट. । ८—व्यापकत्वद्ब्रह्मैव-व्यतिरिक्तेषु । ९—०चार्यदर्शि-क. ख. ग. । १०—एवं व्यतिरिक्तेषु । ११—स एव-घ. ङ. च. छ. । सर्वं एव-ट. । १२—एव इति विशेषः ज. ।

ब्रह्म, अणुरेव जीवः, इति वेदार्थो भगवता कृष्णद्वैपायनेन दर्शितः१। ततः२ सक्रोधैस्तैरुक्तम्—कस्त्वम् ? ३ यः शङ्करमतं दूषयसि । तदा श्रीवल्लभैः४रुक्तम्—भगवतः श्रीपुरुषोत्तमस्याज्ञयाऽऽसुरप्रकृतीनां मोहायाऽस्माववतीर्णः । यथोक्तं पाद्मे भगवता५—

"द्वापरादौ युगे भूत्वा कलया मानुषादिषु ।
स्वागमैः कल्पितैस्त्वञ्च६ जनान्मद्विमुखान्कुरु ॥"

अतो ज्ञायते न तन्मतं७ व्यासस्याभिमतम् । अतो यथा श्रीकृष्णेन गीतायां सर्वोपनिषदा८मर्थ उक्तस्तथैव बादरायणेन "अथातो ब्रह्मजिज्ञासेति" ब्रह्मसूत्रेषूक्तः । तथैव श्रुतिकल्पतरोः फले श्रीभागवते । एवं क्रमोऽङ्गीकर्तव्यो भवद्भिः । यथोक्तम्—

"बुद्धावतारे त्वधुना हरौ तद्वशगाः सुराः ।
नाना मतानि विप्रेषु भूत्वा कुर्वन्ति मोहनम्९ ॥"

अतो यूयं वेदार्थाद् भ्रान्ताः, वेदार्थं विचिनुत१० । तच्छ्रुत्वा सक्रोधैस्तैरुक्तम्—अहो वयं परम्परा११चार्यैर्दर्शितं वेदार्थं जानीमः,

---

१—प्रदर्शि क. ख. ग. । प्रदर्शितः, ञ. । २—तदा-छ. । ३—किं शङ्कर० घ. ङ. च. छ. । ४—०भैनोक्तं क. ख. ग. झ. ञ. ट. । ५—भगवता-इति नास्ति-छ. झ. ट. । ६—त्वं हि—ञ. । ७—तन्मतं००० भिमतं न, ख. झ. ञ. ट. । ८—०षदर्थं—छ. ज. झ. ट. । ९—यथा कथञ्चित्कृष्णस्य भजनं वारयन्ति हि—इत्यधिकः झ. । १०—विचिन्वन्तु-क. ख. ग. झ. ट. । विचिनुथ-घ. च. छ. । ११—०म्परया—ञ. ट. । ०चार्यवर्णितम्—ञ. ।

त्वं तं१दूरीकृत्य पाषण्डं स्थापयसि । तच्छ्रुत्वा श्रीवल्लभैर२-रुक्तम्—पाषण्ड३लक्षणं भवत्स्वेव, यतः शिखासूत्रे न दृश्येते । ततस्तैरुक्तम्—श्रुतिष्वेव संन्यासिनां शिखासूत्रपरित्याग उक्तः । इत्युक्त्वा श्रुतयः पठिताः । श्रीवल्लभ आह—कल्पितास्त्विमाः४, सम्प्रति श्रुतीनामेकादश५ शाखाः प्रचरन्ति, तासु संन्या-सिनां६ धर्माः पठिताः सन्ति । तासु चेत्तर्हि पठ्यताम् । उच्छिन्न७ शाखाश्रुतयो न पठनीयाः प्रमाणाभावात् । इत्युक्ते८ तैः किमपि नोक्तम् ।

एवं९ षण्मासं यावद्विवादः समजनि । तदोपेन्द्राश्रम१०नामा संन्यासी सर्वश्रेष्ठः, तदग्रे मध्यस्थैरुक्तम्—अयं कोऽप्यमानुषो विवादे जेतुमशक्योऽतोऽलं विवादेन । ततः ११ कैश्चिद् दुरात्मभिर्मारणो-द्यमः कृतः । तदा श्रीमहादेवेनाऽऽज्ञा दत्ता—अत्र न स्थातव्यम्, यत्र भागवती सृष्टिस्तत्र गन्तव्यम्१२ । सर्वोपनिषदुपगीतं श्री-कृष्णाख्यं परं ब्रह्मोपदेष्टव्यम्, अत्र यादृशी भगवदिच्छा तादृशमस्ति ।

---

१—तद्-ब. ज. । तदुक्तस्य-म. । २—०भैन०क. ख. ग. म. न. ट. । ३—पाषण्डलिंगं घ. च. छ ज. म. ट. । पापचिह्नलिंगं-ब. । ४—परमहंसोपनिषदाख्यया ख्याता इति विशेषः न. । ५—०मनेकाः शाखाः सन्ति-म. ट. । ६—संन्यासधर्माः—ब. ज. । ७—उत्सन्न—म. ट. । ८—सति-अतिरिक्तेषु । ९—एवं इत्यारभ्य समजनि इत्यन्तं नास्ति—घ. छ. च. । १०—उपेन्द्रनामा—ब. म. ज. ट. । ११—ततः इत्यारभ्य कृतः इत्यन्तं नास्ति—घ. छ. च. । १२—गत्वा—ब. ।

ततो दूरे च्यवना[1]श्रमे चरणाद्रि[2]रिति नगरम्, तत्र वसतिः कृता। तत्रैकदा[3] गङ्गास्नानं कुर्वतः श्रीवल्लभस्य शङ्कराचार्यः प्रादुर्बभूव, आह च—त्वया मन्मतं दूषितम्। एतस्मिन्नन्तरे श्रीकृष्णः प्रादुर्बभूव, आह च—सत्यमेव वल्लभमतं प्रवर्तयिष्ये[4] न शङ्करोक्तम्। श्रीवल्लभ![5] त्वं गोकुलं गच्छ। इत्युक्त्वाऽन्तर्हितः।

ततः[6] श्रीवल्लभः साग्निहोत्रो मथुरामण्डलमाजगाम। तत्र बृहद्वने गोविन्दस्थले भगवन्मन्दिरं कृत्वा भगवत्सेवां[7] कर्तुमारेभे। तत्र कश्चित्[8]काश्मीरदेशीयः केशवभट्टनामाऽऽराधितशङ्करस्तत्प्रसाद[9]प्राप्त वैष्णवधर्मः पूर्वं[10]कृतवसतिः स्म। तयोः परस्परं मैत्र्यभूत्। श्रीवल्लभस्यालौकिको भागवतार्थः केशवभट्टेन ज्ञातः। प्रार्थितञ्च—अत्र श्रीभागवतं व्याख्येयम्। भवान् वक्ता श्रोता चाहम्। ततः[11] सुदिनमुहूर्तावलोक्यादितः श्रीभागवतव्याख्यानमारब्धम्। कालक्रमेण

---

१—पावना—घ. च. छ. ट.। भावना—क. ख. ग.। २—चरणाद्र—घ. ङ. च. छ.। ततो गङ्गातोराश्रितकर्णाटक-इति—झ.। कार्णाट—ट.॥३—तत्रैकदा इत्यारभ्य मन्दिरं कृत्वा भगवत्-इत्यन्तं नास्ति—घ. ङ. च. छ.। ४—प्रवर्तयिष्यते—ट.। वल्लभोक्तं, प्रवर्तिष्यते शङ्करोक्तम्—ञ.। ५—श्रीवल्लभ-नास्ति झातिग्रन्थेषु। ६—ततःनास्ति ट.। ७—भगवत् इति नास्ति झ ट। ८—कश्चित् इति नास्ति—घ. ङ. च. छ. झ. ट.। ९—श्रीवल्लभप्रसादात् झ.। १०—पूर्वंवत्तत्र वसति स्म-ञ.। ११—तत इत्यारभ्य-आदित. इत्येतत्स्थाने तत्र इति घ. ङ. च. छ.।

समापितम्१। ततः केशवभट्टेनोक्तम्—मया पूर्वं यादृशोऽर्थो भागवतस्यावधारितः सोऽपि गतः, श्रीमदुक्तो२ऽपि मे३ हृदि न समागतः४, तत्किम्? ततः५ श्रीवल्लभै६रुक्तम्—यत्७समासन उपविश्य त्वया श्रुतमतस्ते हृदि नागतम्। न मया कदाचिदपि विकृतं वृत्त्यर्थे। अतो मदुक्तमन्योक्तसदृशं मा जानीहि। मया त्वामुद्दिश्य नोक्तम्। त्वच्छिष्योऽयं माधवभट्टनामा,९ अयं मे भ्राता, मह्यमेनं देहि। ततः केशवभट्टेन त्रिभिरन्यैः श्रोतृभिः१० सह श्रीवल्लभाय समर्पितः। ततस्तस्या११त्मसमर्पणं कारयित्वाऽऽत्मीयं विधाय श्रीभागवतटीकाया लेखने श्रवणे चाधिकारी१२ कृतः।

ततोऽन्यः कश्चित्कान्यकुब्जीयो नारायणमिश्रनामा१३ विवादे पराजितः, सोऽपि श्रीवल्लभस्य शिष्योऽभवत् तादृशश्च१४।

---

१—समाप्तम्—क. ख. ग. छ. ज. झ. ट.। पूर्वं वर्तं झ.। २—त्वदुक्तो क. ख. ग. ज. झ. ञ ट.। ३—न मद्धृदि समा० ञ.। ४—समायातः झ.। मद्धृद नागतः—ज.। ५—ततः—इति नास्ति—छ. झ. ट. ६—श्रीवल्लभेन—झ. ञ. ट.। ७—यत् इति नास्ति वार्तिकेषु। ८—मया—इत्यारभ्य नोक्तम् इत्यन्तं नास्ति घ. ङ. च. छ.। ९—त्व प्रच्छ इति विशेषः छ.। अयं मे इत्यारभ्य-सार्द्धं० इत्येतत्स्थाने-एवं प्रपच्छ, ततस्तेनोक्तं मया तु सम्यग् ज्ञातं, तदा केशवभट्टेन त्रिभिरन्यैः सह सर्वोऽपि—घ. ङ. च.। १०—श्रोतृभिः इति नास्ति, सार्द्धं इति क, ख, ग. ज, ञ, ट.। ११—माधवभट्टस्य-इति विशेषः झ,। १२—असावेव महान् ज्ञाता—झ। १३—नामा श्रीवल्लभस्य० इत्येव क. ख. ग. ज. झ. ञ.। १४—ईदृश एव झ.।

ततः पाश्चात्याः सारस्वता १ ब्राह्मणाः, क्षत्रियाश्च बहवः सेवका अभवन् २ । एकैकस्य चरितं गुणाश्च ३ वर्षायुतेनापि वक्तुमशक्याः । तथैव प्राच्या दाक्षिणात्याश्च ।

अथैकदा श्रीवल्लभो गोकुले गृहाद्बहिः कृतचतुःसेवः४ स्नानालङ्कारचन्दनपुष्पमालाभिरलङ्कृतः, सुखेनाल्प५दिनावशिष्टकाल उदङ्मुखः सेवकैः सहोपविष्टः । तदोत्तरस्यां६ यमुनातीरे साक्षाद् व्रजराजकुमारः प्रकटी७बभूव, हस्तेनाकार्य यमुनामुत्तीर्य पश्चिमाभिमुखं प्रस्थितः । ततः श्रीवल्लभोऽ८पि वस्त्रादिकं तत्रैवोत्तार्य कौपीनाच्छादना९वशेषस्तत्र गत्वा तेनैव मार्गेण यमुनामुत्तीर्य भगवन्तमनुवव्राज१०, मथुरां दक्षिणतो विमुच्य यावद् गोवर्धनाचलम् । तत्र त्रिकूट११शिखरस्थं श्रीगोपालराजश्रीगोवर्धननाथाधिष्ठानम् । तत्र गत्वा भगवता स्थितम् । श्रीवल्लभं सन्मुखमवलोक्यावादीत्—अत्राहं श्रीगोकुलाच्छ्रीमद्राधिकया १२ समानीतः । त्वं दूरागमनेन क्लिष्टोऽसि, अथ १३

---

१—सारस्वताः इति नास्ति ट. । सारस्वत इति छ. । २—बभूवुः—म्क. । ३—सद्गुणाश्च क. ग. ज. ञ. । ४—कृतचतुःसेवः इत्येतत्स्थले-सेवकैः कृते चतुरस्त्रे वस्त्रलङ्कार० ज. । श्रीवल्लभः श्रीगोकुले गृहात्बहिर्भिः सेवकैः कृतचतुरसेवः स्नानालङ्कार० म्क. । ५—वान्त्य—म्क. । ६—तदोत्तरतः—म्क. ट. । ७—प्रादुः—म्क. ट. । ८—०भाचार्याः—इति बहुवचनान्त, पाठः समग्रेऽपि वाक्ये—ज. । ९—नाच्छादनमात्रा० म्क. १०—उपवव्राज—म्क. । उपजगाम ट. । ११—अन्नकूट—ज. म्क. ञ. ट. । १२—सह त्वया-इति विशेषः म्क. । १३—त्वं इति विशेषः—म्क. ।

शृणु, यावद्गङ्गा कलौ प्रकटजला १ तावदत्रैवास्मिन्नेव स्वरूपे त्वन्मार्गीयेभ्यः सेवां गृहीष्यामि प्रकटः सन् । अत्रैव मम प्राणवल्लभाया एकान्तविहारस्थलम् । सर्वदा यत्र सा, तत्राऽहमपि । यथोक्तं मयैव २ दशमस्कन्धे नन्दम्प्रति—

"न नः पुरो जनपदा३ न ग्रामा न गृहाश्च वै ४ ।
वयं वनौकसस्तात ! नित्यं शैलनिवासिनः ॥"

"शैलोऽस्मि"०—इति च तत्रैव । किमधिकम् । इत्युक्त्वाऽन्तर्हितं ५ भगवता तस्मिन्नेव स्वरूपे ।

ततः प्रभृति तत्प्रसिद्धं स्थानं वल्लभीयानां सर्वस्वम्६ । पूर्वं ७ विष्णुस्वामिबिल्वमङ्गलादीनां श्रीगोवर्धननाथ एव सर्वस्वम् । तत्तु८ "वंशगिर्याख्यायिका"—यां प्रसिद्धम् ।

यावच्छ्रीवल्लभेन भगवन्तमनुगतं तावत्तत्सेवकेन प्रभुदासाख्येनाक्षिणी निमील्य जलपानादिकं त्यक्त्वा तत्रैव स्थितम्९ ।

---

१—यावद्गोवर्द्धनो गिरिराजः इति विशेषः ज. । २—मयैव-इति नास्ति—ज. झ. ट. । ३—इतिवार्त्तापर्यन्तप्रवासप्राप्तप्राचीन—'ङ' संज्ञकपुस्तकमेतच्छ्लोक-पर्यन्तमेवापूर्वमुपलब्धम्—न नः पुरो जनप-इत्यन्तम् । ४—गृहाश्रमाः ङ- । ५—अन्तर्हितो भगवाँस्तत्रैव—ज. । ६—सर्वस्वं-इति नास्ति, ङातिरिक्तेषु । ७—पूर्वं-इत्यारभ्य प्रसिद्धमित्यन्तं नास्ति घ. च. । ८—तत्तु॰प्रसिद्धमित्येतस्यस्थले-एवं व्रजराजकुमारो वल्लभेन सहैवागत्य स्थितः—ङ. । ९—पतितं—क. ख. ग. ज. झ. ञ. ट ।

पुनः श्रीवल्लभे १ समागते वस्त्रालङ्कारवति२ दृष्टे सति जलपानादिक्रिया कर्तुमारब्धा।

पुनः कालान्तरमवाप्य श्रीवल्लभः कतिपयसेवकैः सार्द्धं३ श्रीगोवर्धननाथालयमाजगाम ४। तत्र ५ सर्वसमक्षं दधिदमण्डनवनीतपात्रं गृहीत्वा श्रीराधिका भगवन्मन्दिर७मध्ये प्रविष्टा तत्रैवान्तर्हिता। ततो भगवन्मुखे नवनीतदधिमण्ड८लेपः सर्वैः प्रत्यक्षतो दृष्टः। एवं बहून्याश्चर्याणि दृष्टानि।

पुनर्गोकुलमागते श्रीवल्लभे सेवकैस्तदाज्ञया मृण्मयं चतुरस्रं कृतम्, तत्र रात्रौ बालकृष्णेन क्रीडितम्। तत्र तच्चरणचिह्नानि सर्वैर्दृष्टानि। पुनः समयान्तरे—

"ब्रह्म९सम्बन्धकरणात्सर्वेषां देहजीवयोः।
सर्वदोषनिवृत्तिर्हि"—

इत्येतावच्छ्रीवल्लभं प्रति भगवता प्रोक्तम्।

---

१—बहुवचनान्तः पाठः सर्वत्र अग्रेऽपि—ज.। २—वस्त्रालङ्कार-इत्यारभ्य आरब्धा-इत्येतस्थाने भगवत्साक्षात्कारो जातः, अनन्याश्रयत्वात्—घ. च. छ.। ३—सह—ज.। ४—जगाम—घ. च. छ. ज.। ५—तत्र इत्यारभ्य-अन्तर्हिता-इत्यन्तं नास्ति—घ. च.। ६—दध्योदनमिष्टनव०—झ.। ७—मन्दिरं प्रविष्टा—ट.। ८—दधिलग्नं००दृष्टम्—ज.। ९—ब्रह्मसम्बन्ध०-इत्यारभ्य प्रोक्तं इत्येतस्थाने "श्रावणस्यामले पक्षे एकादश्यां महानिशि इति नव श्लोकाः श्रीवल्लभं प्रति साक्षाद्भगवतोक्ताः—क. ख. ग. ज. झ. ञ. ट.।

पुनरेकदा कश्चिद्वैष्णवः१ श्रीकृष्णदर्शनाकाङ्क्षी "हा! कृष्ण" इत्युच्चैर्ब्रुवन् वृन्दावनं बभ्राम। तदा भगवता श्रीवल्लभं प्रत्युक्तम्—त्वं२ तत्सेवकसमीपं गत्वा "नीचैः कृष्णेति वद, कृष्णं द्रक्ष्यसि" इति, तथैव श्रीवल्लभः कृतवान्। ततस्तस्य३ गोकुलपतिः४ प्रकटः समभवत्। तिरोधानानन्तरं श्रीवल्लभमेव प्रपन्नो जातः।

कश्चिदज्ञातारे श्रीवल्लभशिष्यो भगवत्सेवां कुर्वाणस्तिष्ठति। एकदा भगवाँस्तमाह—अतस्तूर्णायेऽहं त्वां क्वापि५वैकुण्ठं नेष्यामि। इति श्रुत्वा तस्य महद्दुःख६मजनि७, सेवारसिकत्वात्। तथापि८ तत्तथैव जातम्।

पुनरेकदा गोकुलात्प्रयागादिस्थलेष्वीश्वरेच्छया वसतिं कुर्वाणः श्रीवल्लभः साग्निहोत्रः श्रीपुरुषोत्तमायतनं जगाम९। कालक्रमेण तत्र१० प्राप्तः। तत्रैको महाभक्तः११ कृष्णचैतन्यनामा। तस्य श्रीपुरुषोत्तम१२स्याज्ञा जाता। "मद्रूप१३श्रीवल्लभनामाऽत्रायातः१४,

---

१—सेवकः—ब. ट.। तत्सेवकः—क्र. म.। २—त्वं—इति नास्ति—क्र. मातिरिक्तेषु। ३—तस्मै गोकुलपतेः प्राकट्यमभवत्—घ. च. छ.। ४—०पतिप्राकट्यं जातं—ब. म. ट.। ५—क्वापि—इति नास्ति—क. ख. ग. ज. क्र. म. ट.। वैकुण्ठे—ख.। ६—दुःखं—घ. च.। ७—समजनि—क्र. ट.। अभवत्—ज.। ८—तथापि इति नास्ति घ. च. छ.। तत्रापि—म.। ९—प्रस्थितः—घ. च. छ. ज. क्र. म. ट.। १०—पुरुषोत्तमायतनं—क. ख. ग. ज. क्र. म. ट.। ११—महाविष्णुभक्तः—घ. च. छ.। १२—प्रभूणा-माज्ञा—ज.। १३—मद्रूपमेव—क. ख. ग. ज. क्र. म. ट.। १४—ऽऽगतः ज.।

तं मदग्रे सद्[1]बुद्ध्याऽर्चय" । इति जगन्नाथवाक्यात्तथैवाऽसौ कृतवान् ।

एकदा[2] पूर्वं गङ्गातीरे वसतः श्रीवल्लभस्य गृहे श्रीकृष्णचैतन्यैः[3] समागतम् । तमदृष्टपूर्वं दृष्ट्वा श्रीवल्लभेनोक्तम्—इमे[4] कृष्णचैतन्याः, इत्युक्त्वा नमस्कृताः । तत्समये मध्याह्नभोगानन्तरं भगवति शयनं गते सति स्वधर्मपत्नीं[5] श्रीवल्लभोऽब्रवीत्—भोः ! मदाज्ञया त्वमस्मै सुपक्वमन्नं भोजय । पत्नी प्राह—अनिवेदितं कथं देयम् ? तदा श्रीवल्लभेनोक्तम्—देयमेव, अस्य हृदयस्थः श्रीकृष्णो भोक्ष्यत्येव ।

एकदा[6] श्रीपुरुषोत्तमक्षेत्रे[7] श्रीवल्लभशिष्यान्प्रति कृष्णचैतन्यै[8]रुक्तम्—भवद्भिः श्रीवल्लभे गुरुबुद्धिर्न कार्या, न वा पण्डितबुद्धिः, न वैष्णवबुद्धिः, अयं तु साक्षाद्देवकीपुत्र एव । एवं[9] तत्र बहून्याश्चर्याणि जातानि[10] । पुनस्ततो मथुरामण्डलं प्रत्याजिगमिषाऽजनि ।

---

१—मद्बुद्ध्या—क. ख. ग. ज. झ. ञ. ट. । ऽस्मद्बुद्ध्या—छ. । २—एकदा इत्यारभ्य भोक्ष्यत्येव इत्यन्तं नास्ति—घ. च. छ. । ३—चैतन्येन—ज. ञ. । ४—यूयं—ज. ञ. । ५—श्रीवल्लभैराज्ञप्ता पत्नी पक्वमन्नं देहि, पत्न्याह—आतिरिक्तेषु । श्रीवल्लभाज्ञया पत्नी सिद्धमन्नं चकार । पत्न्याह०—झ. । श्रीवल्लभा० पत्न्या पक्वमन्नं० ट. । ६—तदा—घ. च. छ. । ७—श्रीपुरुषोत्तमक्षेत्रे इति नास्ति ज. । ८—चैतन्येन—ज. ञ. । ९—एवं—इतिनास्ति ज. शतिरिक्तेषु । १०—दृष्टानि—ट. ।

एकदा गङ्गातीरे वसतः श्रीवल्लभस्य ज्येष्ठसुत[1]श्रीगोपीनाथस्य[2] जन्मनि जाते, भगवत्सेवां कुर्वाणस्य पृष्ठे रिङ्गमाण[3]शिशोः स्पर्शः समजनि, सेवायां चेतो व्यग्रमभूत्[4]। तदा स्वभार्यायै क्रुद्धः—"त्वया कस्माच्छिशुर्न रक्ष्यते"[5]। पत्न्याह—शिशुः सुप्तोऽस्ति। तच्चरितमपि भगवदीयं[6] मत्वा तूष्णीमासीत्।

श्रीवल्लभस्याज्ञया[7] यः काश्मीरदेशीयो माधवभट्टनामा[8] भगवत्सेवार्थं स्थितोऽभूत्[9], सोऽनुदिनं दशमस्कन्ध-नवरत्न[10]-पाठं करोति स्म। एकस्मिन्दिने[11] यत्र स्थीयते तत्र ग्रामाधिपतेः सप्तदशवार्षिकः पुत्रो मृतः, तस्य महद्दुःखं जातम्। तस्मिन्समये

---

१—पुत्र—ञ. ㅤ झ. ञ.। २—०नाथजन्मनि—इतिरिक्तेषु। ३—रिङ्खमाणस्य—झ.। ४—अभवत्—ज.। ५—रक्ष्यते—ज.। ६—भगवत्कृतं—झ.। ७—आज्ञया—इति नास्ति ज. झ. ञ.। ८—नामास्ति—क. ख. ग. घ. च.। गङ्गाद्वारे—इति विशेषः ज. ञ.। ९—तदाज्ञया स्थितः—इति विशेषः ज. झ. ञ.। अभूत्—इति नास्ति आतिरिक्तेषु। १०—पञ्चरत्न—क. ख. ग. ज. झ. ञ. ट। ११—एकस्मिन्दिनेत्यारभ्य—पुनः प्रेषितः इत्येतत्स्थाने—एकदा निशि स्वप्ने केनाप्युक्तम्। तव परेद्युः सनत्कुमार-दर्शनं भविष्यतीति प्रबुद्धः। ततः परेद्युर्मध्याह्ने एकाकी भगवद्वायु-पविष्टः पञ्चहायनं बालं ददर्श। बालोऽपि भगवन्तं नमस्कृत्य मां ब्रह्म-विष्टामार्यं जानीहीत्युक्त्वाऽन्तर्हितः। ततो माधवभट्टेन श्रीवल्लभस्याग्रे आगत्य कथितं तच्छ्रुत्वा श्रीवल्लभेन माधवभट्टो द्वारकां प्रेषितः। इति विशेषः क. ख. ग. ज. झ. ञ. ट.।

एकेनोक्तम्—यत्र माधवभट्टानां स्थितिस्तत्र महाननर्थः कथम्? इदं श्रुत्वा तेषां गृहे समागत्य रोदनं चकार। पश्चात्तेषां मनसि दयाऽऽगता। ततः सः प्रभुस्तविधमेकं पद्यं लिखित्वा स्थापितवान्। तत्पद्यम्—

"दयालोरसमर्थस्य दुःखायैव दयालुता।
विश्वोद्धरणदक्षस्य सा तवैकस्य शोभते ॥"

पश्चात्प्रभुणोक्तम्—"जीविष्यति"। तत्र तु एवं जातमेव। परन्तु "महान्भविष्यामि, दासलक्षणं गत"मिति भिया रात्रौ पलायितम्। यत्र श्रीमदाचार्याणां स्थितिस्तत्रागतं श्रीमद्गोवर्धननाथदर्शनार्थम्। माधवभट्टेन श्रीवल्लभानामग्रे कथितम्। तच्छ्रुत्वा श्रीवल्लभैर्माधवभट्टः पुनः प्रेषितः।

एत[1]स्मिन्नन्तरे सिद्धपुरवासी राणाख्यो व्यासवैष्णवः स्थानेश्वरवासिरामानन्दशिष्यो भूत्वा सिद्धपुरे सेवां कर्तुमारेभे। तत्र बहवो गुर्जरदेशीयास्तं प्रपन्नाः। तेषां मध्ये एको द्विवेदिगोविन्दनामा, तत्पिता नारायणदासश्च[2], उदीच्यो[3] वत्सा[4]भट्टाख्यश्च। वत्साभट्टाख्यस्य पत्नी[5] पुत्रौ द्वौ द्वारकायामग्निना मृत्युमवापुः। ततोऽसौ काशीसमीपे गङ्गातीरे गत्वा श्रीवल्लभं प्राप्यात्मसमर्पणं कृत्वा स्वदुःखं निवेदयामास। ततः श्रीवल्लभेन

---

१—एतस्मिन्नन्तरे इत्यारभ्य-मृत्युमवाप इत्यन्तं नास्ति—घ. च.। २—दासःइति नास्ति—ज. ञ. ट.। ३—औदीच्यः इति—क. ञ. व्यतिरिक्तेषु। ४—वत्स—क. ट.। ५—सपत्नी० ०अवापतुः—ञ. ट.।

कियत्कालं प्रतीक्ष्य पुनर्द्वारकायां प्रेषितः। व्यासवैष्णवस्य पत्नी ततो मृत्युमवाप।

एतस्मिन्नन्तरे श्रीवल्लभः क्रमेण देशानतिक्रम्य द्वारकां जगाम। मध्ये श्रीकृष्णपादाम्बुजयुगमभिभजद्भिर्भूपालैस्तत्र तत्र पूज्यमानो बहून्कृतार्थीकर्तुं[1] सिद्धपुरे[2] जिगमिषुर्जातः। ततो भगवता निवारितो "द्वारकामेव व्रज" इति, ततो द्वारकामेव गत्वा श्रीभागवतव्याख्यानं कर्तुमारेभे। तत्र द्वौ मुख्यौ श्रोतारौ, द्विवेदि नारायणो[3]ऽच्युताश्रमनामा दाक्षिणात्यः कश्चित्सन्यासी च।

एकदा[4] द्विवेदिनारायणं प्रति श्रीवल्लभेनोक्तम्—व्यासराणाख्यमत्राकारय[5], तच्छ्रुत्वा सिद्धपुरादाकारितोऽपि नागतः, रामानन्दशिष्यत्वात्। तदा श्रीवल्लभेन किमपि सक्रोधेनोक्तम्—भवतु नाम, श्रीकृष्णोऽस्मदीय एव, असावप्यायास्यति। यदैवमुक्तं तदैव व्यासस्य गृहे महानुपद्रवो जातः। तत्स्थानाच्छ्रीकृष्णोऽपि द्वारकां समागतः[6], केनाऽपि स्वप्ने दृष्टः। ततो राणाख्यो व्यासः कुत्रापि स्थातुं न शक्नोति स्म[7]।

ततः श्रीभागवतं समाप्य भगवद्गीताव्याख्यानं कृत्वा द्वात्रिंश[8]-शदुपनिषद्व्याख्यानं कृत्वा नारायणाख्यमच्युताश्रमञ्च श्रीवल्लभो

१—०म्बुजप्रियभूपालैः—व. म.। २—सिद्धपुरे इत्यारभ्य द्वारकामेव व्रज इति ततो इत्यन्तं नास्ति—घ. च. छ.। ३—०यणाख्यो—ञ.। ४—एकदाइत्यारभ्य न शक्नोति स्म इत्यन्तं नास्ति—घ. च.। ५—ऽऽनय—ऋ. ट.। ६—गतः—ऋ. ट.। ७—स्म इति नास्ति मातिरिक्तेषु। ८—द्विपञ्चाशत्—घ. च. छ.। द्वात्रिंशत् इति नास्ति—ब.।

भगवत्पदं प्रापितवान्। तयोर्मृत्युसमये भगवद्रूपदर्शनं बहूनामेव जातम्। ततः १ प्रस्थातुमारेभे।

एतस्मिन्नन्तरे मायावादिभिः सार्द्धं विवादः समजनि, तत्र २ तान्निर्जित्य "प्रयागं३ याहीति" माधवभट्टं प्रत्युक्त्वा, वत्साभट्टाख्यं गृहस्थं कारयित्वा, द्विवेदिगोविन्दं भगवत्सेवायां स्थापयित्वा, पुनः श्रीपुरुषोत्तमं प्रस्थितः।

ततो राणाख्यो व्यासः श्रीवल्लभमेवानु पुरुषोत्तमं जगाम, तत्र गत्वा प्रपन्नोऽभवत्।

ततो४ गुर्जरदेशाद् द्वौ ब्राह्मणौ श्रीवल्लभपदाम्बुजदर्शनाकाङ्क्षया श्रीपुरुषोत्तमं जग्मतुः। तत्र गत्वा तं प्राप्य कियत्कालं स्थितौ। तत्रैकदा५ श्रीजगन्नाथो हस्त्यारूढो विहारार्थं निर्गतः, तत्र द्रष्टुकामौ निर्गतौ६। तदा७ भगवत्स्वरूपं श्रीवल्लभ८मेव ददृशतुः। पुनः श्रीवल्लभस्य९ स्थानमागत्य श्रीवल्लभं ददृशतुः। यत्स्वरूपं१० दृष्टं तच्छ्रीवल्लभस्याग्रे कथयताम्।

---

१—ततोऽग्रे—ज.। २—तत्र इति नास्ति—ज. झ. ब. ट.। ३—प्रयागं इत्यारभ्य-प्रत्युक्त्वा-इत्यन्तं नास्ति—घ. च. छ.। ४—अर्वाचीन "व" संज्ञक पुस्तके कथानकमिदमतिविस्तरतः, प्रचित्रमिव वर्तते। तथाग्रेऽपि शालिग्रामकथानकमपि। ५—तत्रैकदा-इत्यारभ्य निर्गतौ इत्यन्तं नास्ति—ज। ६—गतौ—झ. ट.। ७—तत्र—झ. ज. ठ.। ८—वल्लभरूप—झ. ट.। ९—स्य इति नास्ति—झ ज. ट.। १०—तद्दृष्टं तदग्रे कथयताम्—इत्येव क्वाचित्केषु। तद्दृष्ट्वा तदग्रे॰—ट.।

एकदा१ श्रीपुरुषोत्तमयात्रायां काचिच्छ्रीवल्लभानुचरी पथि २श्रान्ता गन्तुमशक्ता जाता । श्रीवल्लभेन ज्ञात्वाऽपि शीघ्रमग्रे गतम्, सेवकैस्तस्मिन्निवेदितेऽपि । सा रात्रावेकाकिनी श्रीपुरुषोत्तम-मल्पवयसं ब्राह्मणपुत्र३मिव ददर्श । स आह४—अहं श्री-वल्लभेन त्वां नेतुं५ प्रेषितोऽस्मि, शीघ्रं व्रजेति । सा तेन सार्द्धं भग-वत्६स्थानं प्राप्ता ।७

अथैकदा८ प्रयागे श्रीवल्लभपत्नी तन्माहात्म्यं द्रष्टुकामा-ऽऽसीत् । तया९ऽपि शयनेऽग्निपुञ्जमध्ये श्रीकृष्णरूपमेव श्रीवल्लभ-रूपं दृष्टम्१० ।

एतस्मिन्नन्तरे बदर्याश्रमे वृद्धवैष्णवनामा कश्चिद्वसति११ । तेन सार्द्धं वल्लभस्य महती प्रीतिरभूत् । तस्य भगवत्कृपया१२ भगवत्सा-क्षात्कारमभूत्१३ । तेनासाधारणं श्रीवल्लभस्यालौकिकं माहात्म्यं दृष्ट्वा भगवन्तं प्रति पृष्टम्—सम्प्रति घोरे कलौ श्रीवल्लभमाहा-त्म्यमलौकिकं दृश्यते१४, तत्किम् ?

---

१—एकादशी—म. । २—आचार्यं पथि श्रान्ता श्रान्ता—ब. । पथि श्रान्ता—ज. । ३—बाल—ज. । ४—आहासौ कातिरिक्तेषु । ब्राह्मण-पुत्रः इति विशेषः—ज. । ५—त्वामानेतुं—म. । ६—पुरुषोत्तम—म. । श्रीवल्लभ—ज. ज. । ७—अत्र "कु ब" संज्ञकयोरर्वाचीनपुस्तक-योरेव यमुनायां जलक्रीडाविषयकोऽधिकः पाठ उपलभ्यते, सच प्रक्षिप्तः प्रतिभाति । ८—तथैकदा—ज. । ९—सा—म. । १०—दृष्टवत्—म. । ११—कश्चिद्वैष्णवः—म. । १२—वल्लभकृ—म. । १३—अभवत्—ब. ज. । १४—एव—इति विशेषः—कु. ज. म. प. ट. ।

तच्छ्रुत्वोक्तं भगवता श्रीनारायणेन—"अयं[1] मग्निव्यासनारद-रुद्रश्रीकृष्णांशैः प्रादुर्भूतः[2]। पूर्वमग्न्यंशे[3]नैकवारं राजा भोज इत्यभूत्, व्यासत्वेना[4]ऽऽचार्यत्वम्, अग्नित्वेन व्याख्यानकुशल[5]-त्वम् वागीश्वरत्वात्, नारदत्वेन[6] भक्तिप्रवर्तकत्वम्, श्रीकृष्णत्वेन सर्वभवन[7]समर्थत्वम्, रुद्रत्वेनाऽग्रे सन्न्यासाश्रममवाप्य[8] काश्यां स्वर्गतिः। भगवद्भावः[9] स्वपुत्रे श्रीविट्ठलेश्वरे प्रतिष्ठितो भवि-ष्यती"त्युक्त्वा भगवानन्तर्हितः।

एकदा प्रयागेऽलर्क[10]पुरे वसतिं प्राप्य श्रीवल्लभो मर्त्यलोकं जिहासुरभवत्। तदा ज्येष्ठपुत्रमुद्दिश्योक्तम्—त्व[11]मचिरेण पुरुषोत्तमायतन[12]मवाप्स्यसि, बलदेवरूपत्वात्[13]। अयं

---

१—अयं इत्यारभ्य भविष्यति-इत्यस्य स्थाने अयं साक्षात्पूर्णपुरु-षोत्तम-मुखाग्निरूपः, तेन नात्र चित्रं किञ्चित्। एतन्माहात्म्यं श्री-विट्ठलेश्वरे प्रतिष्ठितं भविष्यति इति पाठः घ. च. छ.। अत्राऽपि "ज" संज्ञकेऽर्वाचीनपुस्तक एव दैवजीवोद्धारार्थं श्रीवल्लभागकव्यजातमिति कथानकं महता सन्दर्भेण लिखितं, तदपि प्रक्षिप्तं भाति। २—०र्भवि-ष्यति—झ। ३—अस्यांशेन—झ. ट.। ४—व्याख्यानं व्यासत्वेन भक्तिप्रवर्तकत्वमाचार्यत्वञ्च—झ. ट.। ५—कौशलम्—ञ.। कौशल्यम्—ज.। ६—नारदत्वेन भक्तिप्रवर्तकत्वं-इति नास्ति—झ.। ७—भवन इति नास्ति झातिरिक्तेषु। कृष्णसमर्पणत्वं-ज। ८—प्राप्य ञ.। ९—भगवद्भाव-इत्यारभ्य-विट्ठलेश्वरे इत्येतस्य स्थाने नारदत्वेन गुणगानभक्तिप्रवर्तकत्वम् गुणैरेतैः कृत्वा श्रीविट्ठलेश्वरः इति—झ.। १०—ऽडेल—ज. झ.। ११—अयं—झ. ञ.। स्वय-मयं गोपीनाथः-ज.। १२—०तने पुरुषोत्तममेष्यति—ज. झ. ञ.। १३—बलदेवरूपत्वात् इति नास्ति-ज. झ. ञ. ट.।

विट्ठलेश्वरो वंशकरो १ भविष्यति, श्रीकृष्णरूपत्वात्२। श्रीभागवतार्थोऽस्मिन्नेव मया स्थापितः३।

एतस्मिन्नन्तरे माधवभट्टाः श्रीवल्लभानुग्रहाद्भगवन्तमवापुः४। प्रभुदासश्च महदलौकिकरीत्या ५।

यदा श्रीभागवततृतीयस्कन्धटीका श्रीवल्लभैः कृता, तदा श्रीबालकृष्णेनोक्तम् उपविश्योक्तम्७—मदीयं चरित्रं ८ व्याकुरु। तदा दशमस्कन्धव्याख्यानमेव कृतम्। द्वितीयस्कन्धे—"भूमेः सुरेतरवरूथविमर्दितायाः," इत्यस्य व्याख्यानं श्रीवल्लभं प्रति श्रीकृष्णेनोक्तम् ९। निबन्धे१०"गृहं सर्वात्मना त्याज्य"मित्यादिश्लोकद्वयं साक्षाच्छ्रीकृष्णेन लिखितम्११।

पूर्वं१२मेकदाऽयोध्यायां श्रीवल्लभकृतं श्रीभागवतव्याख्यानं विप्र-

---

१—०धरो—घ. च. छातिरिक्तेषु। २—श्रीकृष्णरूपत्वात् इति नास्ति—ञ. झ. ज. ट. क. ख ग.। ३—प्रकाशितः—झ.। ४—०मेवापुः झ.। ५—भगवन्तमवाप इत्यधिकः—झ.। ६—०तस्य टीका स्कन्धतृतीयस्य कृता—क. ख. ग. झ ञ ट.। श्रीभाग० स्कन्धत्रयस्यटीका सुबोधिनी कृता—ज.। ७—०विष्टेनोक्तम्—घ. च. छ.। चोपविश्यो०—ट.। ८—चरितं—ज. झ. ञ.। ९—०नैवोक्तम्—क. ख. ग. ञ.। ०नैव कृतं—ट.। १०—निबन्धमध्ये—ज. ञ.। ११—श्रीनवनीतप्रियेणोक्तम्—घ. च. छ.। १२—अत्रापि "ञ" संज्ञकेऽर्वाचीनपुस्तक एव—श्रीवल्लभाचार्यस्य श्रीरामचन्द्रेण सह सम्मेलनं वार्तालापादिकं च महता विस्तरेण लिखितमुपलब्धं—परं तदपि प्रक्षिप्तमिव निरचीयते।

रूपेण हनुमता श्रुतम् । एकदा बदर्याश्रमे "वामबाहुकृतवाम-कपोल" इत्ययमध्यायः श्रीनरनारायणेन श्रीवल्लभमुखाच्छ्रुतः[1] ।

एतस्मिन्नन्तरे श्रीवल्लभैः[2] अलर्कपुरस्थैः स्वपत्नीं प्रत्युक्तम्—मह्यमाज्ञां देहि, अतोऽहं प्रव्रजिष्ये । साऽऽज्ञां नादात् । एकदालर्कपुर उपद्रवोऽकस्माज्जातस्तदा पत्नी श्रीवल्लभमग्निहोत्रशालास्थं प्रत्याह—स्वामिन् ! निर्गम्यतां गृहात्, अग्निरायाति । एवमुक्ते तामेवाज्ञां मन्यमानः श्रीवल्लभाः[3] निर्गत्य गङ्गातीर उपविष्टाः । तत्र त्रिदण्डविधिना "संन्यास निर्णय" उक्तः[4] । यथा विष्णुस्वामी तथा यतिर्भूत्वा काश्यां गताः । तत्रैक[5]विंशतिमे दिवसे स्वरूपमापुः ।

ततः कियता कालेन ज्येष्ठ[6]पुत्रो गोपीनाथः पुरुषोत्तममासाद्य स्वरूपमवाप । तत्पुत्रः पुरुषोत्तमाख्यश्च[7] ।

---

१—अतिप्रसङ्गो जातः—इत्यधिकं—झ. । २—एक वचनान्तः पाठः—ज. झ. ञ. ट. । ३—एकवचनान्तः पाठः—छ. ज. झ. ञ. ट. । ४—सन्यासनिर्णय उक्तः इति नास्ति क. ख. ग. ज. ट. । नारायणेन्द्रतीर्थतः प्रैषमुच्चार्य यथा विष्णुस्वामिना तथा यतीन्द्रेण भूत्वा काश्यां गतम् इति—ञ. । ५—तत्रैव—क. ख. ग. घ. च. छ. ञ. । ६—तज्ज्येष्ठ—ञ. । ७—स्वरूपं प्राप—इति विशेषः—झ. । अत्रापि—'ञ' संज्ञकेऽर्वाचीन पुस्तक एव—देहपरित्यागानन्तरमपि वल्लभाचार्याणां दर्शनं केषाञ्चिद्वैष्णवानां जातं, तेषां लीलानित्या, इत्यादिविषयकं कथानकं, तथा च तेषां सप्तपौत्रादीनां वृत्तान्तश्च विशेषतयोपलभ्यते ।

अथ श्रीविट्ठलेश्वरः सर्वदा[१] जयति । तत्पुत्रा गिरिधरादयश्च श्रीवल्लभादनवमाः[२], पौत्रादयश्च सर्वदा जयन्ति[३] ।

इति श्रीसम्प्रदायप्रदीपे, विष्णुस्वामिस्नेहपात्रे, विल्व-मङ्गलावर्तौ, श्रीवल्लभदीपशिखे श्रीवल्लभ-चरितनिरूपणं नाम चतुर्थं प्रकरणम्

---

१—सदा—ट. । २—श्रीवल्लभाचार्यवंश्याः—घ. च. छ. । विठ्ठुर-नवमाः—क. । ३—सर्वदा जयन्ति—इति नास्ति—क. ।

# पञ्चम-प्रकरणम्

अथोपनिषदां तत्त्वं यद् ब्रह्मेति परं विदुः ।
तदेव देवकीपुत्रः साकारं[1] व्यापि निर्गुणम् ॥ १ ॥
एतावान्सर्व[2]वेदार्थस्तदन्योऽर्थश्च मोहनः[3] ।
इति निर्णीयते चात्र[4] नत्वा श्रीवल्लभं हरिम् ॥ २ ॥

यतो ब्रह्म पर्य्यवसिता वेदाः[5], अतो ब्रह्मप्राप्तिरेव पुरुषार्थः । तद्रूपत्वे क[6] कस्य प्राप्तिः । अतो ये सर्वधर्मान्निषेध्यारूपमेवोपदिशन्ति ते श्रुत्यर्थाद् भ्रष्टाः ।

श्रुतयः कियत्सङ्ख्याः ? यथोक्तं बृहदारण्यके—"स यथार्द्रैधाग्नेरभ्याहितात्पृथग्धूमा विनिश्चरन्त्येवं वारेऽस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासपुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यैवैतानि निःश्वसितानि ।" अत्र यदुक्तं तत्सर्वं वेद एव । ( २ अ० ४ ब्रा० १० )

अतो ज्ञायते श्रुतिस्मृतीतिहासपुराणैः सर्वैः श्रुतिपठितः क्रमः

---

१—साकारो० निर्गुणः—ब-च । साकार० निर्गुणः—क. । २—एव ट. । ३—मोहने—घ. च. छ. ज. झ. । ४—ऽथात्र—क. ख. ग. ज. झ. ट. । ५—वेदान्ताः—क. ख. ग. ञ. ट. । ६—क—इति नास्ति छ. ट. । रूपत्वेव कस्य—ज. ।

"श्रोतव्यो मन्तव्यो निदिध्यासितव्यो द्रष्टव्यः" इति दर्शनपर्यन्त-मेष्वेक१तरेण न भवति । यथाऽऽशौच२तीर्थमाहात्म्यैकादि व्रत विधानफलनिरूपणादि ३ ज्योतिःशास्त्रादिकार्यं, केवलमृग्यजुः सामाथर्वाख्यै४र्न भवति, किन्तु वेदान्त५स्मृतिपुराणेतिहासैः समग्रधर्मनिर्वाहः कर्मकाण्डे ।

एवं निवृत्तिकाण्ड ऋगादिभिः सेतिहास६पुराणैः सर्वैरेव दर्शन-पर्यन्तं ब्रह्मनिर्णयः । अन्यथै७कतराङ्गीकारे८ऽन्धस्य गजस्पर्शवदे-कदेशीयावगतिः९, नतु समग्रा ।

यद्यद्रूपा नामाकर्मकं१० ब्रह्म, तर्हि श्रोतव्य११ इत्यादयः किं विषयाः ? परं श्रुतिस्तूभयथा१२ निरूपयति । तत्र वेदार्थः सन्दिग्धोऽभूत् । अथ वेदार्थनिर्णये१३ किं प्रमाणम् ? कृष्णद्वैपायन एव१४ । (स१५ यद्यन्नामाऽसौ कथं श्रोतव्यः, यद्यद्रूपो,१६ मनननिदि-ध्यासनदर्शनादि क१७ )*

---

१—मेवैक०-ट. । २—ह्याशौच-ञ. । ३—यादिकं-ञ. ञ. । ४—०थर्वणाख्यैः-ञ. । ५—वेदाङ्ग-ञ. म. ट. । ६—सहेतिहास-ञ. ञ. । ७—नान्यथा, यथाऽन्धस्य०-क. ख. ग. ञ. ञ. ट. । ८—ऽधिकारे-ब. च. छ. । अङ्गीकृतौ-म. । अङ्गाकृते-ब. । ९—सैकदेशीया-ञ. । १०—यद्यद्रूपमनाममकर्मकं-ञ । ११—तर्हि किं श्रोतव्यविषयं-ट. । तर्हि श्रोतव्य इत्यादयो धर्माश्च किं-ञ. । १२—तु—नास्ति ञातिरिक्तेषु । १३—निरूपणं-ट. । निर्णयः-ञ. । १४—एव प्रमाणं-ट. । १५—स इति नास्ति ञ.ञ.ट. । १६—तर्हि किं विषयकं मनननिदिध्यासनदर्शनादिकमित्याह-ञ. । १७—कथं-छ. ञ. ।

* स इत्यारभ्य क पर्यन्तः कोष्ठान्तर्गतः पाठः सर्वत्रोपलब्धः, परं मध्ये न सङ्गतः प्रतिभाति ।

कृष्णद्वैपायनप्रामाण्ये[१] यथा स्कन्दपुराणे सूतवचनम्[२]—

"देवाश्च ऋषयश्चैव वेदार्थे मूढतां गताः।
पुरा ब्रह्माणमेत्यार्थं जग्मुः सर्वे विवित्सवः ॥ १ ॥
गत्वा स्तुत्वा च नत्वा च तत[३] ऊचुः पितामहम्।
दुर्ज्ञेयार्थो वेदराशिः क्रमार्थे नैकवाक्यता ॥ २ ॥
कथं तदर्थं भगवन्! वयं जानीमहेऽञ्जसा।
तच्छ्रुत्वा भगवान्ब्रह्मा तुष्टाव पुरुषोत्तमम् ॥ ३ ॥

ब्रह्मोवाच—

यो वेदरूपो वेदार्थो वेदकर्ता च वेदवित्।
वेदार्थे मूढबुद्धीनां स वेदार्थं ब्रवीतु नः ॥ ४ ॥
सत्यं सत्यं पुनः सत्यं न देवः केशवात्परः।
नास्ति वेदात्परं शास्त्रमेतत्सत्यं[४] स तुष्यतु ॥ ५ ॥
इति स्तुतो हृदाकाशे प्रादुरासीत्स्वयं हरिः।
उवाचाजं[५] स भगवान्यः स्वयं पुरुषोत्तमः ॥ ६ ॥
संभविष्यामि कलया सत्यवत्यां पराशरात्।
वेदार्थं च[६] प्रवक्ष्यामि सर्वेषां हितकाम्यया ॥ ७ ॥
ब्रह्मसूत्रं करिष्यामि सर्वश्रुत्यर्थसिद्धये।
दर्शयिष्यामि वेदार्थं भारतव्यपदेशतः ॥ ८ ॥

---

१—प्रमाणे-आतिरिक्तेषु। २—वाक्यम्-ज.। ३—स्थिता-ज.।
४—सत्यात्स तुष्यति-ज.। सत्यात्-ज.। ५—उवाच तं-ब. ज.।
६—चैव वक्ष्यामि-छ. ज. ब. ट.।

वेदशाखासु[1] नष्टासु वेदार्थो भारते कलौ।
दृश्यते नात्र सन्देहः कर्तव्यः केनचित्क्वचित् ॥ ९ ॥
भारते भगवद्गीता श्रुत्यर्थे संशयापहा।
श्रुति कल्पतरोः साक्षात्फलं भागवतं हि तत्[2] ॥ १० ॥
गीतार्थाद्विस्तरेणाहं वक्ष्यामि च विशेषतः।
तेन रूपेण वेदार्थं यद्वक्ष्यामि तथैव तत् ॥ ११ ॥
तं यो न मन्यते मूढः स पाषण्डी नराधमः।
भविष्यति कलौ सृष्टिरासुरी ब्राह्मणेष्वपि ॥ १२ ॥
ते हि वक्ष्यन्ति वेदार्थमन्यथा हि निजेच्छया[3]।
कृष्ण द्वैपायनाख्योऽहं संभविष्यामि[4] सर्वथा ॥ १३ ॥
इत्युक्त्वाजं[5] स भगवांस्तत्रैवान्तरधीयत।
ततः पराशराज्जातः सत्यवत्यां महायशाः ॥ १४ ॥
यदर्थमवतीर्णोऽसौ तत्तथैव चकार ह।"

अतः कृष्णद्वैपायनादि[6]दर्शितो वेदार्थः। सर्वोपनिषत्सु याज्ञवल्क्यादिभिर्यदुपदिष्टं ब्रह्म गार्ग्यादिषु, तदेव देवकीपुत्रः कृष्ण एव। स एव साकारो व्यापको[7] निर्गुणश्च[8]।

यथोक्तं बृहदारण्यके—

"प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो

---

१—शास्त्रेषु-नष्टेषु-ग. च. छ.। २—ततः-झ. ञ. ट.। ततं-ज.। ३—यथे० छ. ञ. ट.। ४—भविष्यामि च.-ब.। ५—ऽजः-झ.। ऽन्तः-ट.। ६. आदि इति नास्ति ञ.। ७—व्यापी-क. ग. घ. च. छ.। ८—श्रीपुरुषोत्तमः इत्यधिकं ञ.। पुरुषोत्तमः इत्यधिकं ब.।

विदुरिति, विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात्, सम्बाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन्देव एकः ।"

श्रीभगवद्गीतासु च—

"सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥"

इत्यत्र[1] लौकिकयुक्त्या निर्णेतुमशक्यम्, अचिन्त्यानन्तशक्तित्वात् । अतो वेदवाक्यार्थत एव मन्तव्यम्[2] । अत एव सर्ववेदार्थदर्शिना बादरायणेन श्रोतव्यादि निरूप्य द्रष्टव्यसमये गीतावक्तृत्वेन कृष्णाख्यमेव ब्रह्म दर्शितं महाभारते । सर्वप्राकृतधर्मविलक्षणमानन्दमात्रकरपादमुखोदरादि जन्मनामकर्मगुणलीलासहितं, सांशं, शुद्धं, कृष्णाख्यमेव ब्रह्म, श्रीभागवते शुकेनाऽपि गीतं, व्यासेनाऽपि कथितम् । अतो ज्ञायते यत्[3]—सर्ववेदतात्पर्यं[4] श्रीकृष्णाख्यं ब्रह्म ।

एवं पराशरेणाऽपि विष्णुपुराणे ब्रह्मपद्मादिष्वपि नराकृतिपरं ब्रह्मेति । अतः सर्वेऽवताराः कृष्णस्य[5] । अवतारी श्रीकृष्ण एव ।

येऽन्ये वैष्णवसिद्धान्तवादिनोप्याचार्याः "सर्वेऽवतारास्तुल्या" इति वदन्ति, तेषामवतारान्तरे सर्वात्मना सेव्यत्व[6]बुद्धिः, तदंशत्वात् । "यो यदंशः स तं भजे"दिति वाक्यात् स्वोपास्या-

---

१—इत्यत्र—इत्यरभ्य शक्तित्वादित्येतत्स्थाने न ह्यत्र लौकिकयुक्त्या निर्णेतुं शक्यं इति पाठः क. ग. घ. च. । २—तथा इति विशेष ब. । ३—यत्इति नास्ति घ. च. । ४—तात्पर्यञ्च-क. ख. ग. ज. । ५—कृष्णाख्यस्य-घ. च. छ. ट. । ६—सेव्यबुद्धिः-छ. ज. व्यतिरिक्तेषु ।

वतारेंऽशत्व[1]कथनं भक्तिमार्गविरुद्धम् । अतस्तेषां तथैव व्याख्यानमुचितम्, स्वेष्टोत्कर्षव्यापकत्वात् । भगवतोऽपि सर्वकरणसमर्थत्वादुचितमेव, "ये यथा मां प्रपद्यन्ते०[2]" इति वाक्यात् । परं श्रुतिस्मृती[3]तिहासपुराणार्थवेदिना श्रीबादरायणेन कर्मज्ञानोपासनाकाण्डात्मकस्य वेदराशे[4]स्तात्पर्यं शुद्धसाकारब्रह्मणोऽनन्तरूपत्वेऽपि मूलरूपं देवकीपुत्र एवेत्युक्तम् ।

यथोक्तं भगवता[5]—

"सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनञ्च ।
वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम्[6] ॥"

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥
यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ! ( १५ अ० )

अहमेवेत्येवकारेण यथादृष्टः शुद्धः साकारोऽहमेव । पुरुषोत्तमत्वेन श्रीकृष्णे ज्ञाते सर्वविद्भवति । सर्वभावेन श्रीकृष्णमेव भजति । "अधिभूतं क्षरोभाव" इति क्षरः पुरुषः । "प्रकृतिः पुरुषश्चोभौ परमात्माऽभवत्पुरा ॥ यद्रूपं समधिष्ठाय तदक्षरमुदीर्यते" इत्यक्षरः पुरुषः, तयोरप्यूत्तमः पुरुषोत्तमः श्रीकृष्ण एव । असावेव फलावतारः । यथोक्तं[7] तृतीयस्कन्धे मैत्रेयेण—

---

१—ऽशकलात्व-ज. । २—ये यथा०-इति पद्यं नास्ति ज. । ३—स्मृति इति नास्ति-ज. ज. ट. । ४—वेदस्य-ज. । ५—भगवद्गीतासु इति विशेषः छ. । ६—इति इति विशेषः ज. ज. ट. । ७—श्रीभागवततृतीय० इति विशेषः ज. ।

"पूर्वस्यादौ परार्द्धस्य ब्राह्मो नाम महानभूत् ।
कल्पो, यत्राभवद् ब्रह्मा शब्दब्रह्मेति यं विदुः ॥
अस्यैव चान्ते कल्पोभूद्यं पाद्‌ममभिचक्षते ।
यद्धरेर्नाभिसरस आसीन्नाभिसरोरुहम् ॥
अयं तु कथितः कल्पो द्वितीयस्याऽपि भारत !
वाराह इति विख्यातो यत्रासीच्छूकरो हरिः ॥

अत्र केचिदिति व्याख्यानं[1] कुर्वन्ति—पूर्वस्य परार्द्धस्यादौ ब्राह्मो नाम महान्कल्पो ब्राह्मवर्षमानेन शतवर्ष सङ्ख्योऽभूत्, यत्र ब्रह्माऽभवत्, यं शब्दब्रह्मेति विदुः । तस्यैव ब्राह्म कल्पस्यान्ते पाद्‌मोनाम महाकल्पोऽभूत्, यत्र हरेर्नाभिसरसः पद्‌ममासीत् । पुनरयं वाराह इति विख्यातो महाकल्पो द्वितीयस्याप्यन्ते—पाद्‌मकल्पस्यान्तेऽभूत् । अतः पूर्वपरार्द्धे वाराहकल्पस्यैव[2] । अवतार[3]-ग्रहणात्पूर्वं ब्राह्मपाद्‌माव भूताम् ।

एवं[4] प्रतिपुराणं महाकल्पाः कल्पभेदाध्याये मत्स्यपुराणे पठिताः । तत्र सारस्वतकल्पोयं श्रीभागवतवृत्तान्तम् । यथोक्तम्[5] तत्रैव[6]—

"सारस्वतस्य कल्पस्य मध्ये स्युर्ये नरावराः[7] ।
तद्वृत्तान्तभवं[8] लोके श्रीभागवतमुच्यते ॥"

---

१—व्याख्यां-ट. । २—अतीतं इति विशेषः ज. । ३—अवतार-ग्रहणात् इत्यस्य स्थाने अतो वाराहकल्पात्-ख. ज. ।—४—एवं इति नास्ति छ. ट. । ५—तद्यथोक्तं-ज. । ६—मत्स्यपुराणे-घ. च. ज. ट. । ७—ऽमराः-क. ख. ग. छ. ज. ट. । ८—वृत्तान्तोद्भवं-छ. च. ट. ।

तत्र[१] भगवान्पुरुषोत्तमः स्वयं पूर्णोऽवतीर्णः । "कृष्णस्तु भगवान्स्वयम्[२] ।" "जगृहे पौरुषं रूपं भगवान्महदादिभि"रिति[३] पौरुषं रूपं जगृहे । अवतारमालाकथनान्ते[४] सूतेनोक्तम्—"एते चांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम्" अत्र भगवानिति पदम्, "आदौ जगृहे पौरुषं रूप" मित्य त्रापि[५] भगवानिति पदं श्रीकृष्णस्य[६] पूर्णत्वप्रतिपादकम् । भगवान्नारायण इति यैर्व्याख्यातं, "यस्याम्भसि शयानस्येत्यस्मिन्पदे नारायणत्वं पौरुषे रूपे एव । "एतन्नानावताराणां निधानं बीजमव्यय"मिति वाक्यात्सर्वेऽवतारा नारायणरूप[७] एव पर्य्यवसिताः । "पुरुषो ह वै नारायणोऽकामयत" इति श्रुतेः । अतएव सर्वैरवतारैरंशकलाविभूतिभिः सहितं नारायणाख्यं पौरुषं रूपं भगवति पुरुषोत्तमे श्रीकृष्णे सदैवास्ति । अतएव पूर्णत्वं श्रीकृष्णे देवकीपुत्रे[८] । सर्वेष्ववतारेषु यावत्यो ज्ञानक्रियाशक्तयः प्रत्येकं सन्ति, ताः सर्वा एकस्मिन्नेव देवकीपुत्रे सन्ति । अतो देवकीपुत्रोक्ता[९] गीता वेदार्थनिर्णयसन्देहे प्रमाणम् ।

अतः श्रीभागवत आदिप्रश्नादारभ्य—

"सूत ! जानासि भद्रं ते भगवान्सात्वतां पतिः ।
देवक्यां वसुदेवस्य, जाता यस्य चिकीर्षया ॥"

---

१—श्रीभग० ट. । २—पुरुषोत्तमः-ज. ञ. टातिरिक्तेषु ।
३—इति वाक्यात् अत्र भगवान्पुरुषोत्तमः पौरुषं च रूपं जगृहे-ञ. ।
४—प्रथमस्कन्धे इति विशेषः ज. ञ. । ५—तत्रापि-ज. ञ. ।
६—कृष्णपूर्णत्व-छ. ट. । ७—रूप मेव-क. ख. ग. । रूपा एव-छ. ।
८—संतिष्ठते इति विशेषः ञ. । ९—प्रोक्ता-ब. ।

इति१ प्रतिस्कन्धं सर्वावतारचरितसंक्षेपनिरूपणे, श्रीकृष्णचरितसविस्तरनिरूपणे भगवतः कृष्णद्वैपायनस्याभिप्रायः सर्वेऽवतारास्तुल्या भवन्तीति२ । अतः श्रीकृष्ण एव पूर्णः । मत्स्यादिभिः पुराणेषु कर्मज्ञानभक्तियोगाः सत्यव्रतादीन्प्रत्युक्ताः सन्ति । वेदार्थनिर्णयसम्मतो सन्यासिनामनुदिनपाठे श्रीभगवद्गीतैव, अतो ज्ञायते सर्वोपनिषदुक्तं परब्रह्म श्रीकृष्ण एव । यथा३सारस्वतकल्पे श्रीकृष्णाख्यं पूर्णं ब्रह्माऽऽविरासी४त्तथाऽस्मिन्नेव वाराहकल्पे वर्तमानमन्वन्तरेऽष्टाविंशतिमे द्वापरे पूर्णं श्रीकृष्णाख्यं ब्रह्माऽऽविरासीत् । इति५ पुराणान्तरेऽप्युक्तमस्ति६ । अतः७ श्रीभागवतमार्गेणैव तद्भजनम् ।

केचिद्८ब्राह्मपाद्मादीन्कल्पान्ब्रह्मणो दैनन्दिनान्वदन्ति, तस्मिन्पक्षे ब्रह्मणश्चैकवर्षमध्ये प्रतिदिनमनुकल्पं त्रीणि शतानि षष्ट्यधिकानि श्रीकृष्णावतारा भवन्ति, पूर्णत्वं सारस्वतकल्पीये । महाकल्पवादिनां मतेऽपि सारस्वतकल्पस्याव्यभिचारः । अन्य कल्पेषु श्रीकृष्णावतारेऽप्यंशत्वम्, पुराणेषु तथैव प्रतिपादितत्त्वात् । देवतात्वं मन्त्राधीनत्वात्, "मन्त्राधीनाश्च देवता" इति वाक्यात् । अतो वैदिकैस्तान्त्रिकैर्वेदतन्त्रोक्तविधिना श्रीकृष्णावताररूपाण्युपास्यन्ते तान्यंशावतारस्यैव९ । अतो वेदतन्त्रोक्तो१० मार्ग

---

१—तथेति-ज. । २—न भवन्ति-ज. । इतिनभवन्ति-ज. ३—यद् छ. । ४—आसीत्-ज. । ५—इत्येवम्-ज. । ६—उक्तमप्यस्ति-ज. । ७—श्रीकृष्णरूपश्रीभाग० ज. । ८—ब्राह्मणाः इति विशेष-ज. ज. । ब्राह्मादीन्-छ. । पाद्मादीन्-ज. ज. । ९—रूपाण्येव इति विशेषः-ष. ष. छ. । १०—तन्त्रोक्त०-छ. ज. । वेदे तन्त्रोक्तः-द. ।

उपासनामार्ग एव मुक्ति मुक्ति१ साधकश्च । "भक्तियोगं स लभते एवं यः पूजयेत मा" मिति भगवद्वाक्यात्२ । पूर्णस्याराधने श्रीकृष्णोक्त एव३ भक्तिमार्गः ।

तद्यथा—चतुर्णां वेदानामुपनिषदां तत्त्वमस्यादि४महा-वाक्यानि चत्वारि । इतिहासपुराणानामेकम् । एवं पञ्चमहा वाक्यानि । तेषामर्थः सर्वैर्यथाप्रकृति विचारितः । एके ब्रह्मजीवयो५-रैक्यं वदन्ति । तत्त्वं६ पदाभ्यामुपदेश७समये८ भेद एव ज्ञायते । आत्मत्वेन ब्रह्मणि ज्ञाते सर्वतोऽधिकप्रेमास्पदमात्मैव ९ । तद् ब्रह्म त्वमसि । तस्य त्वमसीति केचित् । आत्मैव श्रीकृष्णः स त्वमसि, तदीयोऽसि वा । अतो यः प्रेमास्पदं स भजनीयः१० । अनया रीत्या महावाक्यार्थं सद्गुरुमुखाज्ज्ञात्वा११ "शिष्यस्तेऽहं शाधि मां त्वां प्रपन्न" मितिवत्, "श्यामसुन्दर ! ते दास्यमितिवत्—"सकृदेव प्रपन्नाय तवास्मीति च याचते १२ । अभयं सर्वथा १३ दास्य इति जन्मवृतं ममे"त्यवगत्य १४ सद्गुरुवाक्यादात्मसमर्पणं कृत्वा१५ सेवा१६कथाभ्यामेव भजनं कार्यमिति भक्तिमार्गः ।

---

१—मुक्तिमुक्तिभक्ति-ज. । २—भगवत्तत्त्वोक्तत्वात्-ट. । ३—एव-इति नास्ति ज. ज. । ४—०मसीति-ज. । ०स्यादिकानि ज. । ५—जीवपरयोः-ज. ज. ट. । ६—तत्त्वमिति-ज. ज. । ७—०तूपदेश-ज. । ८—अपि इति विशेषः छ. ज. ज. । ९—भवति-ट. । १०—एव-ट. । ११—अव-गत्य ज. । १२—यो वदेत्-ट. । १३—सर्वभूतेभ्यो दास्यामीति-ज. । सर्वदा तस्मै ददाम्येतद् व्रतं ममेति मर्यादापुरुषोत्तम-मुखोद्गतमिदं याथातथ्येनावगत्य-ज. । १४—गन्तव्यं-छ. ट. । १५—भगवते कृत्वा-ज. । १६—कौशल्ये कथायाम्-ज. ।

यथोक्तं[१] भगवद्गीतासु भगवताऽर्जुनं प्रति—

"अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥"

भक्तिलक्षणं सात्वततन्त्र उक्तम्[२]—

"माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः।
स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथा ॥"[३]

"अहं सर्वस्य प्रभव" इति माहात्म्यज्ञानं प्रोक्तम्[४]। "भजन्त" इति स्नेह उक्तः[५]। स्नेहव्यतिरेकेण भजनं[६] न भवति, मातृबालवत्। "भावसमन्विता" इति सर्वतोऽधिकः सुदृढतरोऽप्युक्तः।

भजनप्रकारमाह—

"मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम्।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥"

"मच्चित्ता" इति पञ्चेन्द्रियव्यापारो भगवत्युक्तः। "मद्गतप्राणा" इति कर्मेन्द्रियव्यापारोऽपि[७] भगवत्ये वोक्तः[८]। मद्गतत्वेन निर्दोषत्वञ्च मलांशत्यागेन, प्राणस्य हि क्रियाशक्तिरिति व्याख्यानात्[९]। "बोधयन्तः परस्पर"मिति समानशीलैरेव सङ्गोऽप्युक्तः। "कथयन्तश्च मां नित्य"मिति श्रीभागवतादिश्रवण-

---

१—गीतासु-"अहं सर्वस्य०" ज.। २—उक्तं-इति नास्ति छ. ज. ट.। ३—इति एतस्यार्थो गीताश्लोक उच्यते-इति विशेषः ज.। ४—उक्तम्-ज.झ.। ५—उक्तः-इति नास्ति ज.। स्नेहोप्युक्तः-ज.। ६—भजनासम्भवात्-ज.। ७—अपि-इति नास्ति ज. ट.। ८—०त्येवोक्तः-क. ख. ग. घ. च.। ९—वाक्यात्-ज. झ. ट.।

कीर्तनमप्युक्तम्[१]। एवं सेवा[२]कथालक्षणाभक्तिः सिद्धा, सैव फलरूपाजातेति, "तुष्यन्ति च रमन्ति चेत्यनेन निरूपितम्[३]।

ब्रह्मभावानन्तरमीदृशीं भक्तिं भक्तेभ्यो भगवानेव ददाति, न तु साधनैः। यथोक्तम्[४]—

"ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्॥"

अतः[५] प्राप्तब्रह्मानन्दोऽपि श्रीशुको[६] व्यासाद् भागवतमधीत्य[७] श्रीकृष्णस्यानन्तगुणगणौश्रार्णवे[८] श्रीभागवतकीर्तनादौ प्रवृत्तः। अतो[९] ज्ञायते श्रीकृष्णाख्यमेव सर्ववेद[१०] तात्पर्यं परं ब्रह्म। ये ये यस्मिन्कल्पे[११] मन्वन्तरे[१२] युगे मत्स्यादिभगवद्रूपाण्याराधयन्ति,[१३] ते ते तेषु [१४] भगवद्रूपेषु सायुज्यादि[१५]भावं प्राप्ताः, तेषां तत्तदेव फलम्। येषां[१६] श्रीकृष्ण एव सर्वशास्त्रतात्पर्यं तेषां सारस्वतकल्पीय-पूर्णकृष्णावतारे भजनानन्दानुभवः फलम्। अनेकमहाकल्पपर्यन्तं कृतसाधनानां सर्वावतारभजनस्यापि फलं तदेव, यथा श्रीशुकस्य। यथा श्रुतिरूप[१७]-

---

१—अपि-इति नास्ति ब.। २—साक्षात्सेवा-ट.। ३—०पिता-ब.। ४—भगवद्गीतासु-इति विशेषः ब.। ५—एवं-ज.। यतः-ब.। ६—शुकदेवः-ज.। ७—श्रीभाग०-ज.। भागवतमधीतवान्-ट.। ८—ऽर्णवे तल्लीलाकृष्टचित्तः श्रीभाग०-ज.। ९—तस्मादिति ज्ञायते-ज.। १०—वेदान्ततात्पर्यं-ज.। ११—यस्मिन् यस्मिन्-ब. ज.। १२—मन्वन्तरे-इति नास्ति ज.। मन्वन्तरयुगे-ट.। १३—०न्तिसम-ज.। १४—तेषु-इति नास्ति ब्रातिरिक्तेषु। १५—सायुज्यं प्राप्ताः-ब.। १६—येषाञ्च-ज.। १७—रूप-इति नास्ति क. प.।

गोपिकानाम् । यथाग्निकुमारणाम् । श्रुतिरूपगोपिकानां१ बृहद्वामनपुराणे कथाऽस्ति२ । अग्निकुमाराणां३ श्रीरघुनाथवरदानतो गोपिकात्वप्राप्तिरिति कूर्मपुराणे कथा । "व्रजस्त्रीजनसम्भूतिः श्रुतिभ्यो ब्रह्मसङ्गता" इत्याथर्वणी श्रुतिः ।

"रहस्यमिदमाहादौ ब्रह्मणे पुरुषोत्तमः ।
स नारदाय प्रोवाच, कृष्णद्वैपायनाय सः ॥ १ ॥
स आह शुकदेवाय, ततो मार्गस्तिरोऽभवत् ।
पुनः कलियुगे प्राप्ते श्रीगोपीजनवल्लभः ॥ २ ॥
श्रीविष्णुस्वामिने४ प्राह, तस्माच्च बहवोऽभवन् ।
आचार्याः सर्वतत्त्वज्ञाः कृष्णमार्गप्रवर्तकाः ॥ ३ ॥
तेभ्यः कालक्रमेणैवमभवद्बिल्वमङ्गलः ।
ततस्तिरोहितो मार्गो वर्षसप्तशतं कलौ ॥ ४ ॥
ततोऽग्निरूपी भगवाँछ्रीवल्लभ इति श्रुतः ।
प्रादुर्बभूव तस्मै स प्राह कृष्णेच्छया त्विदम्५ ॥ ५ ॥
बिल्वमङ्गलनामात्र६, तिरोभूय स्थितश्च यः ।
श्रीवल्लभसुतः७ श्रीमाँछ्रीविट्ठल इति प्रभुः ॥ ६ ॥

१—०नां च-ज. । २—प्रसिद्धा-ज. । अस्ति-इति नास्ति-ट. । ३—कुमारर्षीणां रघुवरवरदानतः स्वमनोरथप्राप्तिः । अथ च श्रुतीनां गोलोके श्रीकृष्णविग्रहालोकने कामभावेनात्र गोपिकात्व०-ज. । कुमाराः श्रीरघु०० गोपिकात्वं प्राप्ताः- छ. । ४—स्वामिनं-ट. । ५—०न्त्विदम्-ट. । ०न्वितः-छ. । ६—दक्षिणस्यां प्रवृत्ते पिशाचात्मना तिरो० इति विशेषः ज. । ७—इति श्रीमान्-छ. । वल्लभस्य सुतः श्री०-ज. ।

तेन श्रीवल्लभात्प्राप्तं रहस्यं राधिकापतेः।
श्रीविट्ठलसुताः सर्वे ख्याता गिरिधरादयः॥ ७॥
कुर्वन्तो भगवद्भक्तिमायुष्मन्तो भवन्त्विह"॥

श्रीवल्लभप्रोक्त-श्रीविष्णुस्वामिसम्प्रदाये सर्वतोऽधिकं वस्तु[1] पञ्चकं भगवता स्थापितम्। गुरुसेवा, भागवतार्थः, भगवत्स्वरूप-निर्णयः, भगवत्सेवा, नैरपेक्ष्यमिति[2]।

यदत्रोक्तं[3] गदाख्येन लिखित्वा पुस्तके पुनः।
सम्प्रदायप्रदीपे तत्सत्यमस्तु हरीच्छया॥ ८॥

प्रपञ्चासत्त्वं ये वदन्ति कुधियो व्यापकत्वञ्च जीवे।
न वेदार्थो येषां भवति च कलौ कृष्णमार्गाऽनुसारी[4]॥
न निर्णीतं पूर्णं स्वहृदि च परं[5] साकृति ब्रह्म शुद्धम्।
न तेभ्यः शुश्रूषा न च विविदिषा नो[6] विवक्ष्यं ममास्ति॥९॥

अर्बुदारण्य - सम्भूतो द्विवेदीति गदाधरः[7]।
साम्प्रदाय-प्रदीपाख्यं ग्रन्थमेनं चकार सः[8]॥ १०॥
वासं कृत्वा वृन्दारण्ये धृत्वा चित्तं श्रीराधेशे।
ग्रन्थं कृत्वा गदनामायं कृतकृत्योऽस्तु श्रीकृष्णात्॥ ११॥
अर्बुदादग्निदिग्भागे ह्यवोरगिरि - सन्निधौ।
एकलिङ्गा[10]च्छिवक्षेत्रान्नैर्ऋत्यां दिशि विश्रुतम्॥ १२॥

---

१—वस्तु-ज्ञातिरिक्तेषु। २—प्रेमापेक्षा-ज.। ३—यदत्रोक्तमित्यारभ्य "रामदत्तादयः श्रुता"-इत्येतदन्तं नास्ति घ. च. छ.। ४—वाक्यानु०-ख. ज.। ५—परब्रह्म विमलं-ज.। ६—मे मतिरिति-ज.। ७—०मिथः-ज्ञातिरिक्तेषु। ८—यथा ह्येनं-ज.। ९—ह-ज.। १०—०लिङ्गशिव०ज.।

सर्वसेवोपकरणं श्यामसुन्दर-मन्दिरम् ।
वसन्ति तत्र तत्सेवां कुर्वन्तश्च कथां मुदा ॥
गदाख्य - पुत्रपौत्राद्या रामदत्तादयः श्रुताः ॥ १३ ॥
श्रीवल्लभोक्तमार्गेण कृष्णसेवापराः सदा ।
भवन्तु१ सुखिनः सर्वे श्रीकृष्णस्य प्रसादतः ॥ १४ ॥
तेषु नित्यं प्रसन्नोऽस्तु श्रीमद्वल्लभनन्दनः ।
मदन्वयस्वीकरणे सदा भवतु वल्लभः२ ॥ १५ ॥

श्रीमन्नृपति३विक्रमार्कसमयातीत - षोडशशताधिकदशम-संवत्सरे श्रीमद्वृन्दावने४ श्रीगोविन्ददेव५ सान्निध्ये६ द्विवेदि-गदाख्येन ग्रन्थोऽयमकारि ।

इति श्रीसम्प्रदायप्रदीपे, विष्णुस्वामिस्नेहपात्रे,
बिल्वमङ्गलावर्त्तौ, श्रीवल्लभदीपशिखे
श्रीकृष्णाख्यब्रह्मनिर्णयो नाम
पञ्चमं प्रकरणम्
"समाप्तोऽयं सम्प्रदाय-प्रदीपः"

---

१—०न्ति-ज. । २—ममोपरि कृपां कृत्वा गुरुः श्रीविट्ठलेश्वरः—इति विशेषः ज. । ३—नृपविक्रम—ञ. । विक्रमार्कराज्यसमयात्-ट. । विक्रमादित्यसमयात्-छ. ज. । ४—श्रीवृन्दा०-ट. । वृन्दारण्ये-ञ. । ५—श्रीगोविन्ददेव इति नास्ति छ. । ६—सन्निधौ—ञ. ।

( श्री द्वारकेश-ग्रन्थमाला* )

# विद्याविभाग द्वारा प्रकाशित पुस्तकें



| | | |
|---|---|---|
| १ | विधवा-विवाह-खण्डन ( बुरहानपुर-शास्त्रार्थ ) ... | ।) |
| २ | सनातन धर्म ... ... ... ... | =) |
| ३ | पुष्टिमार्गीय वैष्णवोनुं आन्हिक ( गुजराती ) ... | =) |
| ४ | मङ्गल-मणिमाला ( १-२-३-४-५-६ स्तवक ) प्रत्येक | ।) |
| | ( संस्कृत-हिन्दी कविता ) | |
| ५ | कविता-कुसुमाकर भाग १ } श्री० द्वा० कवि-मण्डल | ॥) |
| | ,, ,, ,, २ } का समस्या-पूर्ति-संग्रह | ॥) |
| ६ | कनकाभिषेक ( गुजराती ) ... ... ... | ।) |
| ७ | दोलोत्सव-व्यवस्था ( संस्कृत-गुजराती ) ... ... | =) |
| ८ | साम्प्रदायिकग्रन्थ-सूची ... ... ... | ।) |
| ९ | सम्प्रदायप्रदीप ( हिन्दी-गुजराती-अनुवाद सहित ) | २) |

---

* इस ग्रन्थमाला में संस्कृत तथा हिन्दी-साहित्य की प्राचीन तथा नवीन दोनों प्रकार की पुस्तकों के प्रकाशन का आयोजन किया गया है। प्रथम ही ग्राहक-श्रेणी में नाम लिखानेवालों को पुस्तकें पौने मूल्य में देने का विचार किया गया है।

## शीघ्र प्रकाशित होनेवाली पुस्तकें

१ श्रीद्वारकाधीश की प्राकट्य वार्ता ( सचित्र ) कांकरोली का इतिहास तथा तृतीय सेवा-पद्धति ... ... ...

२ प्रभु चरित्र-चिन्तामणि ( सानुवाद ) ... ...

३ हरिभजन-मणि मञ्जरी ( सानुवाद ) ... ...

४ भगवत्तत्व-दीपिका ( सानुवाद ) ... ... ...

५ श्रीवल्लभाचार्य और हिन्दी-साहित्य ... ...

इत्यादि

---

प्राप्तिस्थान—

सञ्चालक

**विद्याविभाग, कांकरोली**

( मेवाड़ )